

# ॥ श्रीगुर्वष्टकम् ॥

श्रीमत्परमहंस परिव्राजकाचार्य श्रीबालकभारती पूज्यपाद शिष्य परमहंस हरिहरानन्द भारती

विरचितम्.

तत्कृतयाचाऽद्वैतार्थप्रकाशिकया "मणिदीपिका" स्वव्याख्यया समुल्लसितम.

बी. ए. इत्युपाधिधारिभिः, पट्टणी त्युपनामभिः कृष्णा (कानजी) त्मज विजयशंकर शर्माभि र्गुर्जर भाषानुवादेन संभूषितम.

छाया इत्युपाह्व विजयशंकर तनुज गुलाबराय वकील.

इत्येतैः प्रकाश्यं नीतम्.

शकाब्दा १९७९. सन १९२३.

परमार प्रेस–राजकोट.



श्रोत्रियो ब्रह्मनिष्ठः स्वामी श्रीहरिहरानन्द भारती परमहंसः ॥
(ग्रन्थकारः)



ब्रह्मविद्वरिष्ठाः श्रीगुरुबालक भारती संन्यासिनः ॥

( येषां स्तोत्रमिदं तइमे ).

# प्रस्तावना ।

अयं खल्वजातवादपरो ग्रन्थः । अतो नास्मिन्ग्रन्थे भूतसृष्टिः । तेषां कारणसूक्ष्मस्थूलावस्थाः । तासां समष्टिव्यष्टिभेदभिन्ना अन्तर्यामिहिरण्यगर्भवैश्वानरप्राज्ञतैजसविश्वा अभिमानिनः । इत्यादिः प्रपञ्चः कृतः ।

अपि तु केवलमुत्तमाधिकार्युपयोगिपदार्था एव वर्णिताः सन्ति मात्रमननार्थम् ।

यस्य पुनर्मन्दाधिकारिणः प्रपञ्चंद्रष्टुमिच्छा स्यात् । स खलु माण्डूक्योपनिषद्गौडपादीयकारिकाभाष्याऽऽदीन्दीर्घग्रन्थान्पश्यतु ।

अथानुबन्धचतुष्टयं (अधिकारिविषयसंबन्धप्रयोजनानि) तु यदन्यवेदान्तग्रन्थेषु वर्णितमस्ति तदेवात्राप्यस्ति अतो न पृथग्वर्णितमस्यापि वेदान्तरूपत्वादित्यलम् ॥



ॐ

# अथ गुर्वष्टकप्रारम्भः ।

( [1]शार्दूल० वृत्तानि )

यस्माज्जायत आत्मनोऽखिलमही रज्जो यथा भ्रान्तितो
यस्मिंस्तिष्ठति सर्वमेव गगने निष्ठा यथा नीलता ॥
यस्मिन्नेव विलीयते च यदिदं रज्ज्वां यथा सर्पधी-
स्तं श्रीबालकभारतीयतिमहं वन्दे गुरुं चिद्घनम् ॥१॥

ब्रह्मा वै स स विष्णुरेव स शिवः सूर्य्यः स चन्द्रः स वा
इन्द्रः सैव स वायुरेव स गुरुर्वेदान्तकृतमोक्षदः ॥
एवं सर्वविधोऽपि यो हि सकलाद्भिन्नः सदा वस्तुत-
स्तं श्रीबालकभारतीयतिमहं वन्दे गुरुं चिद्घनम् ॥२॥

या शक्ति र्विभुचेतने वसति सा द्व्यंशा स्वयं विद्यते
माया तत्र विशुद्धसत्त्वसहिताऽविधाऽपरा या च यः ॥

---

१ सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम् ।

तां मायामवलम्ब्य शुद्धपुरुषो यातीश्वरत्वं तत-
स्तं श्रीबालकभारतीयतिमहं वन्दे गुरुं चिद्घनम् ॥३॥

यस्येशस्य पृथग्गुणैरवयवा ब्रह्मा हरिः शंकरो
ब्रह्मा तत्र करोति सर्वजगतां सृष्टिं हरिः पालकः ॥
रुद्रो हन्ति पुनस्तथा भवति यो वाच्यस्ततस्तद्गिर-
स्तं श्रीबालकभारतीयतिमहं वन्दे गुरुं चिद्घनम् ॥४॥

एवं सर्वविवर्त्तरूपजगतो ह्येको विभुः कारणं
स्वाज्ञानेन विभाति चेतनघनः कर्त्तेव चाऽऽदौ तथा ॥
भर्त्ता मध्य इवापि नाशसमये हन्तेव यो ज्ञायते
तं श्रीबालकभारतीयतिमहं वन्दे गुरुं चिद्घनम् ॥५॥

यस्याज्ञानवशादयं हि सकलो बद्धोऽस्ति लोको वृथा
यं ज्ञात्वा च विमुच्यते बुधजनः संसारबन्धात्क्षणात् ॥
आनन्दं निजरूपमेव नचिरात्प्राप्नोति चाऽऽप्तं पुरा
तं श्रीबालकभारतीयतिमहं वन्दे गुरुं चिद्घनम् ॥६॥

तमाश्रित्य चिदंशरूपपुरुषोऽविद्यां स जीवो भवेत्
स्वात्मानं च ततो ह्यसौ परवशं मत्वा करोत्युद्यमम् ॥

कृत्वा कर्म च तत्फलाय परमं देवं पुनः स्तौति यं
तं श्रीबालकभारतीयतिमहं वन्दे गुरुं चिद्घनम् ॥७॥

दृष्ट्वा भ्रान्तिवशाच्च तं भययुतं भूत्वा कृपासंयुतो
ज्ञानादन्य उपाय एव भुवि ते मोक्षस्य भो जीवनो ॥
वक्तुं चेत्थमु यो विचार्य नृतनुं धृत्वा स आहोक्तिमों
तं श्रीबालकभारतीयतिमहं वन्दे गुरुं चिद्घनम् ॥८॥

एतच्छ्रीगुरुदेववन्दनपरं मोक्षप्रदं चाष्टकं
माङ्गल्यं यतिनाहवैविरचितं प्राज्ञो हराऽऽख्येन यः ॥
नित्यं भक्तियुतः पठेत्स परमां शान्तिं ध्रुवां प्राप्नुया-
च्छ्रीमत्सद्गुरुदेवपादकमले सक्तोऽत्र नो संशयः ॥९॥

इति श्रीमत्परमहंसपरिव्राजकाऽऽचार्य श्रीबालकभारतीपूज्यपाद-
शिष्यपरमहंसहरिहराऽऽनन्दभारतीविरचितं
श्रीगुर्वष्टकं संपूर्णं ।
ॐ तत्सत् ॥१॥



# अथ विषयानुक्रमणिका ।

इति ॥



# अथगुर्वष्टकप्रारम्भः ॥

( [1]शार्दू० वृत्तानि )

यस्माज्जायत आत्मनोऽखिलमही रज्जौ यथा भ्रान्तितो
यस्मिंस्तिष्ठति सर्वमेव गगने निष्ठा यथा नीलता ॥
यस्मिन्नेव विलीयते च यदिदं रज्ज्वां यथा सर्पधी-
स्तं श्रीबालकभारतीयतिमहं वन्दे गुरुं चिद्घनम् ॥१॥

ॐ तत्सत् । गुरुभ्यो नमः । अथ गुर्वष्टकाद्वैतार्थप्रकाशिका मणिदीपिका व्याख्या प्रारभ्यते—

यस्मादिति । तं गुरुमहं वन्द इत्यन्वयः । तं कं ? यो बालकभारतीनामा यतिः संन्यासी भूत्वा वर्तते तम् । अथेदानीं

---

१. सूर्याश्वैर्मसजस्तताः सगुरवःशार्दूलविक्रीडितम् ।

तस्य [१]लक्षणमुच्यते—(१) तत्र [२]तावत्तटस्थलक्षणमुच्यते—**यस्मादित्यादिना पादत्रयेण**। तत्रापि तावत्सामान्यतः सर्वनाम्ना कथ्यते—

( अथ सामान्यनाम्ना तटस्थलक्षणम् )

---

१ लक्षणं द्विविधं भवति—१ तटस्थलक्षणं २ स्वरूपलक्षणं चेति।

२ कदाचित्तत्र वर्त्तित्वे सति तद्व्यावर्तकत्वं तटस्थलक्षणत्वम्। तदुदाहरणम्—यथा "काकवद्गृहं गच्छ" इत्यत्र काको गृहस्य तटस्थलक्षणम्। कुतः काको न सर्वदा तद्गृहे वसति। तथाऽपि तदानीं त्वन्येभ्यः काकरहितेभ्यो गृहेभ्यः स्वाऽऽश्रयभूतगृहं व्यावृत्य ज्ञापयति। अतः काको गृहस्य तटस्थलक्षणं भवति न स्वरूपलक्षणम्। तथैव जगज्जन्माद्यपि परमात्मनि कदाचिदेव भवति न सर्वदा। तथाऽप्यन्यवस्तुभ्यः परमात्मानं व्यावृत्य ज्ञापयति परमात्मानं विनाऽन्यत्र जगज्जन्माद्यनुपपत्त्या। अतःपरात्मनो जगज्जन्मादि तटस्थलक्षणमिति बोद्धव्यम्। (कादाचित्कत्वे सति व्यावर्त्तकं तटस्थलक्षणम्)

गुर्वष्टकमद्वैतार्थप्रकाशिकया मणिदीपिकया व्याख्यया सहितम् ।

यस्मादिति । (२) यस्मादिदं दृश्यमानं कर्तृक्रियाफलात्मकमखिलं जगज्जायते तमितिसंबंधः ।

ननु यदि जगद्वस्तुतो जायते तर्हि द्वैताऽऽपत्तेः

" नेह नानाऽस्ति किंचन " ( का. २ । १ । ११ ) इतिश्रुत्या विरोधः स्यादित्याशंकायामुच्यते—रज्जोरिति । यथा भ्रान्तितो भ्रान्तिवशाद्रज्जोःसकाशादप्रच्युतपूर्वस्वरूपाया एवाहिः सर्पो मिथ्यैव दृश्यते तथेदमपि जगद्भ्रान्तिवशादेव जायत इव दृश्यते नतुपरमार्थतो जायतेऽतोन श्रुतिविरोध इत्यभिप्रायः । तथा चेममेवाभिप्रायमाश्रित्यात्रापि श्रुतिरस्ति—" यतो वा इमानि भूतानि जायंते । येन जातानि जीवन्ति । यत्प्रयन्त्याभिसंविशन्ति " ( तै. ३ । १ ) इति ।

ननु रज्जुज्ञानानन्तरं रज्जुसर्पो न दृश्यते । इदं तु सर्व जगद्यथापूर्वमेवाधिष्ठानज्ञानान्तरमपि दृश्यते । तत्कथं मिथ्या भवितुमर्हतीत्याशंक्य दृष्टान्तान्तरमुच्यते—गगने निष्ठेति । यथा गगने निर्विकारे नीलतारहितेऽपि व्योम्नि निष्ठा स्थिता व्योमनिर्मलत्वज्ञानरहितदशायां सत्येव दृष्टा या नीलता सा " नेयं निलता किं तु निर्विकारे गगने नीलताया भ्रान्तिरे-

बास्ति " इत्येवं गगननिर्विकारज्ञाने तथा नीलतामिथ्यात्वज्ञाने सत्यपि पूर्ववदेव गगने नीलता दृश्यते । तथेदं ब्रह्मादिस्थावरान्तं जगदपि सर्वं मिथ्याऽपि सच्चसिन्नधिष्ठाने व्योमस्थानीये निर्विकारे सति परमात्मनि तिष्ठति यत्सत्यत्वेन सत्यवद्भाति ( अतो न तत्र सत्यत्वदुराग्रहः करणीयः ) । तथा यदिदं प्रत्यक्षं जगद्दृश्यते तत्सर्वं ज्ञानदशायां यस्मिन्विलीयतएव (रज्जुसाक्षात्कारेसर्पभ्रान्ति यथा नश्यति तथेदं जगदपि नश्यति, गगननिर्विकारत्वसाक्षात्कारे नीलतायान्मिथ्यात्वेन निश्चीयत इत्यभिप्रायः ) । तमितिपूर्ववत् ।

तदेवं सामान्येन सर्वनामनिर्देशेन तटस्थलक्षणमुक्तं संप्रति विशेषनामनिर्देशेन तटस्थलक्षणमुच्यते—

( अथ विशेषनाम्ना तटस्थलक्षणम् )

**आत्मन इति** । (३) यस्मादात्मन इदमखिलं जायते येनात्मना सर्वं तिष्ठति यस्मिन्नात्मनि विलीयते च सर्वं तमात्मानं गुरुं वन्द इत्यन्वयः ।

तत्राऽऽत्मशब्दार्थः—

" यच्चाऽऽप्नोति यदादत्ते (४) यच्चात्ति विषयानिह ।

यच्चास्य संततो भावस्तस्मादात्मेति कीर्त्यते ॥ "

यच्छब्दाः सर्वे यस्मादर्थे द्रष्टव्याः । " आप्लृ व्याप्तौ " इति धात्वर्थानुगमादाप्नोति व्याप्नोति स्वस्मिन्कल्पितान् स्वविवर्तभूतान्सर्वपदार्थानस्ति भाति प्रियरूपेणेत्यात्मा व्यापकः । तथा च यद्यस्मादाप्नोति तस्मादात्मेतिकीर्त्यते श्रुत्या ब्रह्मविद्भिर्वेत्यन्वयः । किंच यद्यस्मादादत्ते संहरति स्वात्मन्येव सर्वं तस्मादात्मेतिकीर्त्यते । लयाधिष्ठानमात्मोच्यत इत्यर्थः । कार्यस्य च कारणे लय इत्यात्मनोऽनया व्युत्पत्त्योपादानकारणत्वं लभ्यते मायाविशिष्टस्य । किं च यद्यस्मादिह लोके विषयानत्ति तस्मादात्मेतिकीर्त्यते । अनया व्युत्पत्त्या स्वचैतन्याऽऽभासेनोपलब्धृत्वमात्मनो लभ्यते । किं च यद्यस्मादस्य संततो भावस्तस्मादात्मेतिकीर्त्यते । यस्मात्कारणादस्याऽऽत्मनः संततो निरन्तरो भावः कल्पितस्याधिष्ठानसत्तामन्तरेण सत्ताऽभावाद्यथा रज्ज्वामध्यस्ते सर्पे रज्ज्वाः सातत्यं तथा कल्पितं सर्वं येन स्वस्वरूपवत्स आत्मेत्यर्थः । तथा चाधिष्ठानत्वमात्मनो लभ्यते । इत्यात्मशब्दार्थः ॥

तथा चैवं भूतादात्मशब्दविषयाद्यस्माद्गुरोरिदं सर्वं विव-

तद्रूपेण जायते यस्मिंस्तिष्ठति यस्मिंश्च विलीयते तमात्मानं गुरुं वन्द इत्यन्वयः । इतितटस्थलक्षणम् ॥

तदेवं प्रतिपाद्यवस्तुनस्तटस्थलक्षणमुक्तमथेदानीं [1]स्वरूपलक्षणमुच्यते—

---

१ नित्यं तत्र वर्तित्वे सति तद्व्यावर्तकत्वं स्वरूपलक्षणत्वम् । तदुदाहरणम्—यथा "शुक्लगृहं गच्छ" इत्यत्र शुक्लवर्णो गृहस्य स्वरूपलक्षणम् । कुतः शुक्लवर्णो नित्यमेव तद्गृहे विद्यते तथाऽन्येभ्यो नीलपीतादिवर्णवद्भ्यो गृहेभ्यः स्वाश्रयरूपशुक्लगृहं व्यावृत्त्य ज्ञापयति । अतः शुक्लवर्णो गृहस्य स्वरूपलक्षणम् ।

तथैव सच्चिदानन्दादयो ( सत्यज्ञानानन्तादयः )ऽपि परमात्मनः स्वरूपलक्षणम् । कुतः ? सच्चिदानन्दादयोऽपि नित्यं परमात्मनि विद्यंते तत्स्वरूपत्वादेव । तथाऽन्येभ्योऽनित्यजडदुःखाल्पाऽऽत्मकेभ्यः पदार्थेभ्यः परमात्मानं व्यावृत्य ज्ञापयति । अतः सच्चिदानन्दादयः ( सत्यज्ञानानन्तादयः ) परमात्मनः स्वरूपलक्षणमिति बोध्दव्यम् ।

( स्वरूपं सत् व्यावर्तकं स्वरूपलक्षणम् )

गुर्वष्टकमेतद्वर्तार्थप्रकाशिकया मणिदीपिकया व्याख्यया सहितम् ।

( अथ स्वरूपलक्षणम् )

चिद्घनमिति । चिद्घनं चिदेकरसं (५) चित्पदं सदानन्दयोरप्युपलक्षणम् । तथा च सच्चिदानन्दघनं गुरुं वन्द इति सिद्धम् । तत्र श्रुतिश्चभवति—" सत्यं ज्ञानमनन्तं ब्रह्म । " ( तै० २ । १ ) इति । तत्र यद्यपि श्रुतौ त्वनन्तपदमस्ति नानन्दपदम् । तथापि योऽनन्तो भवति स एवाऽऽनन्दोऽपि भवत्येव " यो वै भूमा तत्सुखं नाल्पे सुखमस्ति भूमैव सुखम् । " ( छां० ७ । २३ । १ ) इतिश्रुतेः । अतः सच्चिदानन्दानन्तं ( सत्यं ज्ञानमानन्दमनन्तम् ) गुरुं वन्द इति सिद्धम् । तत्र त्रिषु कालेष्वबाध्यत्वं सत्यत्वम् । ज्ञानं स्वयंप्रकाशम् । आनन्दं निरतिशयसुखं दुःखसंयोगरहितत्वं वा । अनन्तं देशकालवस्तुपरिच्छेदरहितम् । गुरुं (६) 'गु' मूलाज्ञानं संसारकारणम् । 'रु' तन्नाशकस्तदाधारश्च स्वयंप्रकाशः सच्चिदानंद आत्मा । स ह्यज्ञातः सन्सर्वप्रपंचाऽऽधारो भवति यथा रज्जुरज्ञाता सती सर्पदंडमालाजलधाराभूच्छिद्रादिभ्रमाणाम् । अथाऽपरोक्षतया ज्ञातः सन्पुनः सकार्याज्ञाननाशको भवति यथा रज्जुरपरोक्षतया ज्ञाता सती सर्पादिसर्वभ्रमान्ना-

ज्ञयति तथा । तत्र श्रुतिः—" आत्मानं चेद्विजानीयादय-मस्मीति पूरुषः । किमिच्छन्कस्य कामाय शरीरमनुसंज्वरेत् ॥" ( बृह. ४ । ४ । १२ ) इति । तथा च य औपाधिकरूपेण जगदुत्पत्तिस्थितिलयहेतु र्भवति बालकभारतीयतिश्च भवति मायया । यथा निद्रया स्वप्नद्रष्टस्वप्नप्रपंचस्य भवति हेतुः । अथ वास्तविकस्वरूपेण तु चिद्घनश्चिदेकरस एवास्ति यस्तमुक्त-विशेषणं गुरुं ¹परमात्मानमहमविद्यांऽशावच्छिन्न आत्मा वन्दे नमामि (७) भ्रान्तिकल्पितविरुद्धभावं परिच्छिन्नाहंभावं हित्वा भागत्यागलक्षणावृत्त्या " अहं ब्रह्मास्मि " इति तदभेदबुद्ध्या तन्निरुपाधिकस्वरूपे मम व्यष्ट्यहंकार समर्पयामि तदभेदभावं व्रजामि । तदेतदप्यभेदभावेन परमात्मचिंतनं नमनं भवति । तद्यथाऽस्मिँल्लोकेऽपि यः कश्चित्पुरुषो येन केनचित्पुरुषेण सह स्वकृतविरुद्धभावं त्यक्त्वा संधिं करोति । सोऽपि " अयं पुरुषोऽस्मै पुरुषाय नतोऽस्ति " इत्युच्यते यथा तथाऽत्रापि जीवः स्वकृतं भेदभावं हित्वा परमात्मना सहैकीभावं व्रजति तादात्म्यभावं प्राप्नोति । सोऽयं जीवब्रह्मणोरभेदभाव² एव

---

१ अयमधिकारिनिर्देशः । २ अयं विषयनिर्देशः ।

गुर्वष्टकमद्वैतार्थप्रकाशिकया मणिदीपिकया व्याख्यया सहितम्।

" वन्दे " इत्यस्या नमनाक्रियाया अर्थ इति बोद्धव्यमन्यार्थस्याद्वैतवादेऽसंभवात् । तथा च श्रुतिः—

" योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति. न स वेद यथा पशुरेवꣳ स देवानाम् " ( बृह. १। ४। १० ) इति । तथा " यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते। अथ तस्य भयं भवति ॥ " ( तै. २ । ७ ) इति च। सोऽयमभेदचिंतनरूपोप्यर्थो भूतपूर्वगत्योच्यते न साक्षात्कारे । तत्र त्वस्याप्यसंभवान्निष्प्रयोजनत्वाच्चेति द्रष्टव्यम् ।

तथा च श्रुतिः— " न ध्यानं च न च ध्याता न ध्येयोऽध्येय एव च । " ( तेजोबिंदुप. १ । १० ) " बन्धमोक्षादिकं नास्ति सद्वाऽसद्वासुखादि वा । जातिर्नास्ति गतिर्नास्ति वर्णो नास्ति न लौकिकम् । सर्वं ब्रह्मेति नास्त्येव ब्रह्म इत्यपि नास्ति हि । चिदित्येवेति नास्त्येव चिदहंभाषणं नहि। अहं ब्रह्मास्मि नास्त्येव नित्यशुद्धोऽस्मि न क्वचित् " । (तेजोबिन्दूप. ५–३८ । ४० ) " बन्धत्वमपि चेन्मोक्षो बन्धा-

३ ( फलाधिकारिणोः प्राप्यप्रापकभावसंबंधः । )

भावे कमोक्षता। मरणं यदि चेज्जन्म जन्माभावे मृतिर्न च। त्वमित्यपि भवेच्चाहं त्वं नो चेदहमेव न। इदं यदि तदेवास्ति तदभावादिदं न च। अस्तीति चेन्नास्ति तदा नास्ति चेदस्ति किंचन। कार्यं चेत्कारणं किंचित्कार्याभावे न कारणम्। द्वैतं यदि तदाऽद्वैतं द्वैताभावेऽद्वयं न च। दृश्यं यदि दृगप्यस्ति दृश्याभावे दृगेव न। अन्तर्यदि बहिः सत्यमन्ताभावे बहिर्न च। पूर्णत्वमस्ति चेत्किंचिदपूर्णत्वं प्रसज्जते। तस्मादेतत्क्वचिन्नास्ति त्वं चाहं वा इमे इदम्। नास्ति दृष्टान्तिकं सत्ये नास्ति दार्ष्टान्तिकं ह्यजे। परं ब्रह्माहमस्मीति स्मरणस्य मनो नहि। ब्रह्ममात्रं जगदिदं ब्रह्ममात्रं त्वमप्यहम्। चिन्मात्रं केवलं चाहं नास्त्यनात्मेति निश्चिनु। इदं प्रपंचं नास्त्येव नोत्पन्नं नो स्थितं क्वचित्। चित्तं प्रपञ्चमित्याहुर्नास्ति नास्त्येव सर्वदा। न प्रपञ्चं न चित्तादि नाहंकारो न जीवकः। मायाकार्यादिकं नास्ति माया नास्ति भयं नहि। कर्ता नास्ति क्रिया नास्ति श्रवणं मननं नहि। समाधिद्वितयं नास्ति मातृमानाऽऽदि नास्ति हि। अज्ञानं चापि नास्त्येव ह्यविवेकं कदाचन। ” ( तेजोबिन्दूप. ५। २४-३४ ) इत्याद्या श्चासंख्याकाः श्रुतयो भवंति।

अतोऽभेदविचारोऽपि साक्षात्कारात्पूर्वमेव सावकाशो भवति न साक्षात्कारे पुनर्घटते तत्र मूलाज्ञाननिवृत्तेस्तत्कार्यस्य भेदभावस्याभावाद्बन्धमोक्षतत्साधनानां सर्वेषामनुपपत्तेः। यत्र हि भेदप्रतीतिस्तत्रैवाभेदभावनाऽपि संभवति नतु भेदाभावे किमपि घटत इतिसिद्धान्तः।

तर्हि पूर्वोक्तः " वन्दे " इत्यस्याःक्रियाया अभेद-विचाररूपोऽर्थः कुत्रोपयुज्यते ?। इतिचेत् साक्षात्कारात्पूर्वं त्ववश्यमेवासावंगीकर्तुमर्हः। कुतः?। साक्षात्कारोपायत्वात्। नहि क्वापि किमप्युपायमन्तरेणोपेयं वस्तु लभ्यते केनापि। अतो न निष्फलोक्ति रिति तात्पर्यम् ॥

" ज्ञानकर्मपदार्थौ द्वौ वस्तुकर्त्रात्मतंत्रकौ।
ज्ञानान्मोक्षो न कर्मभ्य इतिवेदान्तडिंडिमः ॥ "

( इति प्रथम श्लोक व्याख्या ) ॥ १ ॥

उ० पूर्वश्लोके " इदमखिलं जायते " इत्युक्तम्। तत्र किमात्मकंतदिदमखिलमित्याकांक्षायां तत्स्वरूपमुच्यते—

**मू० ब्रह्मावै स स विष्णुरेवसशिवः सूर्यः स चन्द्रः स वा इन्द्रः सैव स वायुरेव स गुरुर्वेदान्तकृन्मोक्षदः ॥**

एवं सर्वविधोऽपि यो हि सकलाद्भिन्नः सदा वस्तुत-
स्तं श्रीबालकभारतीयतिमहं वन्दे गुरुं चिद्घनम् ॥२॥

टी० ब्रह्मेति । स वै स एव । पूर्वश्लोके पंचम्योक्तः । तथा "आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचन मिषत्स ईक्षत लोकान्नु सृजा इति ॥" (ऐ. १ । १ । १) "आत्मैवेदमग्र आसीदेक एव सोऽकामयत जाया मे स्यादथ प्रजायेय ॥" (बृ. १ । ४ । १७) "स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो" (छा. ६ । ८ । ७) इत्यादिश्रुत्युक्तश्चिद्घनः परमात्मैव ब्रह्मा स्रष्टा । विष्णुः पालयिता । शिवः संहर्त्ता कल्याणरूपो वा । सूर्यश्चक्षुरिन्द्रियानुग्राहकः । चन्द्रः सुधात्मकः । इन्द्रः सुरपतिः । वायुः समष्टिरूपो व्यष्टिरूपः प्राणादि र्वा । वेदान्तकृत् वेदस्यान्तो निर्णयस्तस्य कर्त्ता मोक्षदो महावाक्योपदेशद्वारा संसारबन्धभ्रान्तिनाशको गुरुराचार्यः । इत्यादिनानाकारेण [1]विवर्त्तते ।

---

१ (८) स्वरूपविकारमन्तरेणैवान्यथाऽवभासो विवर्तः।

अत्र ब्रह्मादीनां कथनं [२]सर्वजगदुपलक्षणार्थम् । तेन च ब्रह्मादिस्थावरान्तं सर्वविश्वं परमात्मविवर्तः। परमात्मैव स्वस्वरूपादप्रच्युत एव नानाऽऽकारेण परस्परविरुद्धरूपेणावभाति स्वाऽऽश्रितयाऽनिर्वचनीययाऽनाद्यविद्ययेति सिद्धम् ।

तत्र श्रुतयः—

" स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट् । स एव विष्णुः स प्राणः स कालोऽग्निः स चन्द्रमाः । स एव सर्वं यद्भूतं यच्च भव्यं सनातनम् ॥ " ( कै० १ । ८-९ ) " त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी । त्वं जीर्णो दण्डेन वंचसि त्वं जातो भवसि विश्वतो मुखः । नीलः पतङ्गो हरितो लोहिताक्षस्तडिद्गर्भ ऋतवः समुद्राः । अनादिमत्त्वं विभुत्वेन वर्त्तसे यतो जातानि भुवनानि विश्वा ॥ " ( श्वे० ४ । ३, ४ ) इत्याद्याः । तथा च विवर्त्तस्याधिष्ठानव्यतिरेकेण सत्त्वाभावात् " स एव ब्रह्मा " इत्यादिषु बाधायां सामानाधिकरण्यम्—" (१०) पुरुषः स्थाणुः, सर्पो रज्जुः, रजतं शुक्तिः " इत्यादिष्विवेति बोद्धव्यम् ।

---

२ उपलक्ष्यते (सूच्यते) स्वं स्वेतरच्च येन (९) तदुपलक्षणम्।

गुर्वष्टकमद्वैतार्थप्रकाशिकया मणिदीपिकया व्याख्यया सहितम् ।

तदेवं विवर्त्तस्वरूपमुक्तं पादद्वयेनाथेदानीमधिष्ठानस्वरूप मुच्यते—**एवमिति** । एवमुक्तप्रकारेण सर्वविधोऽपि ब्रह्मादि-स्थावरान्तेन परस्परविलक्षणस्वभावेन सर्वजगदाकारेण विवर्त्त-मानस्सन्नपि यो (११) वस्तुतः स्वस्वरूपेण तु सदा नित्यं प्रपंचाऽऽभासकालेऽपि सकलात्संपूर्णात् स्वस्मिन्कल्पिताद्विव-र्त्तात्मकात्प्रपंचाद्भिन्नः पृथङ्निर्विकार एव विद्यते तं गुरुं वन्द इत्यादि व्याख्यातम् ।

**ननु** पादद्वयेनोक्तानामन्येषां खल्वस्तु मिथ्याविवर्त्त-रूपत्वम् । परन्तु मोक्षदस्य वेदान्तकृतो गुरोस्तु कथं मिथ्या-विवर्त्तरूपत्वं स्यात् ? । कुतः । तस्य मिथ्यात्वे तत्कृतं वेदा-न्तशास्त्रमपि मिथ्यैव स्यात् । तथा तत्कृत उपदेशोऽपि मिथ्यैव स्यात् । तथा च सति मिथ्योपदेशेन मोक्षो न स्यात् । अतः प्राप्तं मोक्षसाधनजातस्य वेदान्तविचारादेरा-नर्थक्यम् । इति चेत् । न । बन्धस्यमिथ्यात्वात्तदपेक्षस्य मोक्षस्य मिथ्यात्वं सिद्धमेव । ततश्च यादृशयक्षन्यायेन मिथ्या-ऽऽचार्यकृतमिथ्योपदेशेन मिथ्या मोक्षोऽपि भविष्यति । इत्यतो न कोऽपि दोषः । एतदुक्तं भवति—गुरोःस्वरूपं तु नित्य-

गुर्वष्टकमद्वैतार्थप्रकाशिकया मणिदीपिकया व्याख्यया सहितम् ।

शुद्धबुद्धमुक्तसच्चिदानन्दात्मकमेवास्ति तथाऽपि गुरुशरीरं गुरुत्वं वा मिथ्याविवर्त्तात्मकमेवभवति । किं च शिष्यत्वापेक्षया गुरुत्वमुत्तमं पूज्यं च भवति ह्यविद्यापरिकल्पितव्यवहारदशायाम् । तथाऽप्यविद्याकल्पितविवर्त्तत्वस्य तूभयत्रापि गुरुत्वशिष्यत्वयोस्तादवस्थ्यमेवास्ति । अतो गुरुत्वशिष्यत्वदेवत्वमनुष्यत्वतिर्यक्त्वादिनानाभासात्मकं सर्वमपि जगत्परात्मविवर्तभूतमेवेति सिद्धान्तः । तस्य च विवर्त्तात्मकस्याधिष्ठानेन परमात्मना सह बाधायामेवसामानाधिकरण्यं संभवति न मुख्यसामानाधिरकण्यम् । कल्पितस्य सत्येनसह तदसंभवाद्रजतस्येव शुक्त्या सहेति ॥

" सत्तास्फुरणसौख्यानि भासंते सर्ववस्तुषु ।
तस्माद्ब्रह्ममयं सर्वमिति वेदान्तडिंडिमः ॥ "

( इति द्वितीय श्लोक व्याख्या ) ॥ २ ॥

उ० पूर्वश्लोके " सर्वंजगत्परमात्मविवर्तात्मकं केवलं प्रातिभासिकमेव नाधिष्ठानव्यतिरेकेण किंचिदपि वस्त्वस्ति । किं त्वधिष्ठानं परमात्मैवाप्रच्युतपूर्वस्वरूप एव नानाऽऽकारेण विवर्त्तते । " इत्युक्तम् । तत्र किं पुनर्विवर्त्तनिमित्तम् ? ।

इत्याकांक्षायामुच्यते—

मू० याशक्तिर्विभुचेतने वसति सा द्व्यंशा स्वयं विद्यते
माया तत्र विशुद्धसत्त्वसहिताऽविद्याऽपरा या च यः ॥
तां मायामवलम्ब्य शुद्धपुरुषो यातीश्वरत्वं तत-
स्तं श्रीबालकभारतीयतिमहं वन्दे गुरुं चिद्घनम् ॥३॥

टी० । येति । विभुचेतन इति ।

विभुश्चासौ चेतनश्चेति विभुचेतनः । देशकालवस्तुपरिच्छेद-शून्यत्वं विभुत्वम् । स्वयंप्रकाशत्वं चेतनत्वम् । तस्मिन्विभु-चेतने । (१२) या " अजामेकां लोहितशुक्लकृष्णाम् । " ( श्वे० ४ । ५ ) " मायां तु प्रकृतिं विद्यात् । " ( श्वे० ४ । १० ) " पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च । " ( श्वे० ६ । ८ ) इत्यादिश्रुतिप्रसिद्धा शक्तिर्वसति सा शक्तिः स्वयं स्वतोऽजसा द्व्यंशा विद्यते । द्वावंशौ विभागौ विभागाविव विभागौ प्रकारौ यस्याः सा द्व्यंशा द्विधा द्विप्रकाराऽस्तीतिश्चवत् । तत्रेति । तत्र द्वयोः प्रकारयोर्मध्ये । (१३) विशुद्धसत्त्वसहिता विशुद्धं रजस्तमो-भ्यामनभिभूतं सत्त्वं सत्त्वगुणो विशुद्धसत्त्वं विशुद्धं च

गुर्वष्टकमद्वैतार्थप्रकाशिकया मणिदीपिकया व्याख्यया सहितम्।

तत्सत्त्वं चेति विशुद्धसत्त्वं तेन विशुद्धसत्त्वेन सहिता विशुद्धसत्त्वसहिता शक्तिर्माया भवति। अविद्येति। (१४) अपरा ऽशुद्धेन रजस्तमोभ्यां रजोगुणतमोगुणाभ्यां सहितेन रजोगुणतमोगुणाभ्यां व्यामिश्रेण सत्त्वेन सहिता या सा शक्तिरविद्या भवति । य इति । तां (१५) शुद्धसत्त्वां मायामवलम्ब्याधिष्ठाय ततो हेतो र्यः शुद्धपुरुषः स्वस्वरूपेण वस्तुतो मायामलसंबन्धरहितत्वाच्छुद्धः परिपूर्णत्वाच्च पुरुषः शुद्धश्चासौ पुरुषश्चेति शुद्धपुरुषः परमात्मा । ईश्वरत्वं तत्पदवाच्यत्वं याति प्राप्नोति। वास्तविकस्वरूपेण शुद्धःसन्परिपूर्णश्च सन्नपि यश्चिद्धातुः स्वाश्रितां शुद्धसत्त्वां मायाशक्तिं [1]शुद्धसत्त्वप्रधानां

१ मायाया मायाकार्यस्य च सर्वस्य सर्वत्रापि त्रिगुणात्मकत्वात् क्वापि केनापि गुणेनान्याभ्यां गुणाभ्यां विना केवलेनैकेन भवितुमशक्यत्वात् यत्र यत्र यो यो गुणो दृश्यते तत्र तत्र तस्य तस्य गुणस्य प्राधान्यमेव भवति न तत्र स एक एव गुणः केवलं भवति गुणद्वयं विना। अतो मायाऽपि शुद्धसत्त्वप्रधानैव भवति न शुद्धसत्त्वा भवितुं शक्नोतीत्यतः " शुद्धसत्त्वाम् " इत्युक्तेऽपि पुनः " शुद्धसत्त्वप्रधानाम् " इत्युक्तमिति तात्पर्यम् ।

गुर्वष्टकमद्वैतार्थप्रकाशिकया मणिदीपिकया व्याख्यया सहितम् ।

मायाशक्तिमधिष्ठाय सर्वज्ञत्वसर्वशक्तित्वादिभावं प्राप्येश्वरत्वं तत्पदवाच्यतां याति (अविद्वद्दृष्ट्या)। तमित्यादि व्याख्यातम्॥

" (१६) अविद्योपाधिको जीवो मायोपाधिक ईश्वरः ।
मायाऽविद्यागुणातीत इति वेदान्तडिंडिमः॥ "

( इति तृतीयश्लोकव्याख्यया ) ॥ ३ ॥

उ० पूर्वश्लोके ' शुद्धपुरुषः परमात्मैव स्वाश्रितां शुद्धसत्त्वप्रधानां मायामधिष्ठायेश्वरत्वं याति ' इत्युक्तम् । तत्र किमात्मकं तदीश्वरत्वं ? । इत्याकांक्षायांतत्स्वरूपमुच्यते—

**मू० यस्येशस्य पृथग्गुणैरवयवा ब्रह्मा हरिः शंकरो**
**ब्रह्मा तत्र करोति सर्वजगतां सृष्टिं हरिः पालकः॥**
**रूद्रो हन्ति पुनस्तथाभवतियो वाच्यस्ततस्तद्गिर-**
**स्तं श्रीबालकभारतीयतिमहं वन्दे गुरुं चिद्घनम्॥४॥**

टी० । यस्येति । यस्य मायाशबलत्वं गतस्येशस्य पृथक् पृथङ् मायागुणै रजआदिभिः पृथक् पृथग् (१७) ब्रह्मा हरिः शंकरश्चेति त्रयोऽवयवा अवयवा इवावयवाः सन्ति। तत्र तेष्ववयवेषु ब्रह्मा रजः प्रधान ईश्वरावयवः सर्वं जगतां

सृष्टिं करोति । हरिः सत्त्वप्रधान ईश्वरावयवः सर्वजगतां पालकः पालयिता भवति । रुद्रः पुनस्तमोगुणप्रधान ईश्वरावयवः सर्वजगंति हन्ति संहरति ।

अध्यात्मपक्षे तु सर्वानुभवसिद्धं ह्येतत् । तथा हि——संसारी जीवोऽप्येकस्यामेव जाग्रदवस्थायां वर्त्तमानोऽपि यदा रजोगुणप्रधानो भवति तदा खलु नानाविधाननेकान्संकल्पमयान्मिथ्यापदार्थान्कल्पयति । यदा तु सत्त्वगुणप्रधानो भवति तदावै दयाधर्मादिशुभगुणयुक्तः सन्यथाशक्ति प्राणिपालनं करोति । यदा पुनस्तमोगुणप्रधानो भवति तदा किल सर्वां मनोवाक्कायक्रियां स्वस्मिन्नेव संहृत्य तूष्णीमेव तिष्ठति यथा । तथैवेश्वरपक्षेऽपि बोद्धव्यम् ।

तथा हि——परमात्मैव स्वस्वरूपेण निर्विकार एव सन्नव्यविवेकदृष्ट्या मायाशबलत्वं प्राप्य मायाऽवांतरभेदै रजआदिगुणैः पुनः कुत्रचित्कस्यचिद्गुणस्य प्राधान्येन स्रष्टा भाति । कुत्रचित्कस्यचिद्गुणस्य प्राधान्येन पालयिता भाति । क्वचित्कस्यचिद्गुणस्य प्राधान्येन तु संहर्त्ता भाति ।

तत इति । तत उक्ताद्धेतोः । मायामधिष्ठाय सर्वज्ञत्व-

सर्वशक्तित्वादिभावप्राप्ते जगदुत्पत्त्यादिकरणाच्च हेतो यः परमात्मा तद्गिरस्तत्पदस्य वाच्यः शक्यो भवति तमितिसंबंधः। तमित्यादि व्याख्यातम्।

(१८) तथा च [1]माया, मायायां प्रतिबिंबितश्चिदा-[2]भासो, मायाधिष्ठानचैतन्यं[3] चेति त्रयाणां पदार्थानां समूहस्तत्पदवाच्यो भवति। (१९) माया[2]चिदाभासौ हित्वा तदधिष्ठान[3]चैतन्यमात्रं तत्पदलक्ष्यार्थः। इति विवेकः॥

"समष्टिव्यष्टिरूपो द्वौ पदार्थौ सर्वसंमतौ।
समष्टिरीश्वरो व्यष्टिर्जीवो वेदान्तडिंडिमः॥"

( इतिचतुर्थश्लोक व्याख्या )॥ ४॥

उ० पूर्वश्लोके जगदुत्पत्त्यादिकर्त्तारो ब्रह्मादय ईश्वरांशभूता उक्ताः। तत्र किं जगद्वास्तविकं कल्पितं वा। ब्रह्मणि चेश्वरत्वं तद्वारा जगत्कर्तृत्वादिकं च वास्तविकमुत प्रातिभासिकम्?। इत्याकांक्षायामुच्यते—

**मू० एवं सर्वविवर्तरूपजगतो ह्येको विभुः कारणं**
**स्वाज्ञानेन विभाति चेतनघनः कर्त्तेव चाऽऽदौ तथा॥**

---

१ समष्टिमाया।

भर्त्ता मध्य इवापि नाशसमये हन्तेव यो ज्ञायते
तं श्रीबालकभारतीयतिमहं वन्दे गुरुं चिद्घनम् ॥५॥

टी० । एवमिति । एवमुक्तप्रकारेणानिर्वचनीयमाया-वष्टम्भेनैव वस्तुत एको विमुश्चेतनघनोऽपि सन्परमात्मा सर्वस्य (२०) विवर्तरूपस्य जगतः कारणमुपादानं भवति न स्वतः ।

तत्र श्रुतिः—" इन्द्रो मायाभिःपुरुरूप ईयते " ( बृह. २ । ५ । १९ ) । इति । इन्द्रः परमेश्वरो मायाभि-रविद्याप्रज्ञाभिः पुरुरूपो बहुरूप ईयते प्रतीयते। वस्तुत एक-रूपः प्रज्ञानघन एव सन्नपि मिथ्याधीहेतुभूतानाद्यनिर्वाच्य-दण्डायमानाज्ञानवशादेव बहुरूपो भाति । प्रकारभेदात्तु बहु-वचनम् । इतिश्रुत्यर्थः ।

तथा चाविद्यादृष्ट्यैव परमात्मा विवर्त्तते न ज्ञानदृष्ट्या। तत्र विवर्त्तलक्षणम्—

(२१) अप्रच्युतपूर्वस्वरूपस्यासत्यनानाऽऽकारावभासो विवर्त्तः । इति । तदेव परमात्मनोऽपि कर्तृत्वादिभावेऽपि घटतेऽतस्त-देवोच्यते—

स्वाज्ञानेनेति । यश्चेतनघनश्चिदेकरसः सन्नपि परमात्मा स्वाज्ञानेन स्वस्याऽऽत्मनोऽज्ञानेनाहंब्रह्मास्मीतिबोधेन विना । अथवा स्वाश्रितेन स्वव्यामोहकरेणाज्ञानेन स्वाज्ञानेनानाद्यनिर्वाच्येनाज्ञानेन स्वरूपाश्रितेनाऽऽवरणशक्त्यात्मकेन तत्कार्येण विक्षेपशक्त्यात्मकेन चाऽऽदौ सर्गकाले कर्त्तेव विभाति चकारात्कार्यमिवापि यो विभातीति द्रष्टव्यम् । तथैव मध्ये स्थितिकाले यः परमात्मा भर्त्तेव पालयितेव विभाति । अपिशब्दात्पालनीयरूपेणापि यः परमात्मैव विभातीति च बोद्धव्यम् । तथैव च नाशसमये प्रलयकाले यो हन्तेव संहर्त्तेव विभाति तथा हननीयाकारेणापि यः स्वयमेव ज्ञायते प्रतीयते तमिति संबन्धः । तमित्यादि व्याख्यातम् ।

एतदुक्तं भवति—प्रथमं शुद्धचैतन्याश्रितानाद्यनिर्वाच्यामायाशक्तिःस्वाऽऽवरणशक्त्या तदेव चैतन्यमाच्छादयति । तदनन्तरं सैव शक्तिः स्वविक्षेपशक्त्या तदेव चैतन्यं निर्विकारं सदेव विपरीतप्रकारेणेश्वरत्वेन जीवत्वेन जगत्त्वेन च दर्शयति ।

तथा चैवं सति देशकालवस्त्वादीनां कर्तृकरणकर्मादीनां च सर्वेषां पदार्थानां कल्पितत्वात् "आदौ मध्ये नाशसमये"

गुर्वष्टकमद्वैतार्थप्रकाशिकया मणिदीपिकया व्याख्यया सहितम् ।

इत्यत्रोक्तः कालोऽप्यविद्याकल्पित एव न वस्तुतः परमात्मनि कालोऽप्यस्तीति दिक् ।

(२२) ननु भवतु सर्वस्येश्वरादिस्थावरान्तस्य जगतः परमात्मविवर्त्तत्वेन कल्पितत्वम् । तथाऽप्येकाऽऽत्मवादे कर्तृ-कर्मप्रतीतिविरोधः स्यात् । कुतः ? । नहि लोके क्वचिदेक-स्मिन्वस्तुनि कर्तृकर्मभ्रान्तिरपि भवत्येककाले । नापि संभवति चैकस्मिन्काल एकवस्तुनि कर्तृत्वकर्मत्वयोरसंभवात् । अत एकस्यैवाऽऽत्मनः कर्तृकर्माऽऽकारेण प्रतीति र्न सम्भवति दृष्टविरोधात् । दृश्यते तु ब्रह्मादिषु कर्तृत्वमस्मदादिषु च कर्म-त्वमित्यतो न विवर्त्तवादेऽप्येकाऽऽत्मवादो घटते । न हि रज्ज्वां सर्पाद्याकारेण विवर्त्तमानायामपि सत्यां कर्तृकर्मभ्रान्ति र्भवति कदाचित् । अतो विवर्त्तवादेऽपि नैकाऽऽत्मवादो घटते । परि-शेषात्तु नानाऽऽत्मवाद एव साधुः । इति चेत् । (२३) न । एकाऽऽत्मवादेऽपि कर्तृकर्मप्रतीतेः सम्भवात् । तथा हि— (२४) यथा स्वप्नदृक् क्वचित्कुलालं कर्तारं पश्यति । क्वचि-च्चक्रदण्डाऽऽदीनि करणानि पश्यति । क्वचिद्घटादिकार्याणि पश्यति । क्वचिद्राजानं पश्यति । क्वचित्प्रजाः पश्यति ।

क्वचिच्चोरं पश्यति । क्वचिच्छासितारं पश्यति । क्वचिच्छत्रुं पश्यति । क्वाचिन्मित्रं पश्यति । क्वचिदुदासीनं पश्यति । क्वचित्स्थावरं पश्यति । क्वचिज्जंगमं पश्यति । इत्याद्यनेकान्विरुद्धस्वभावान्पदार्थान्पश्यति । तथा स्वमपि चाप्रच्युतपूर्वस्वरूपमेव ब्राह्मणोऽहं शूद्रोऽहं पूमानहं स्त्र्यहं सुखयहं दुःख्यहमित्यादिविपरीतभावं प्राप्तं मन्यते । इति सर्वलोकप्रसिद्धं ह्येतत् ।

तत्र यथैक एव सन्निर्विकार श्चापि सन्साक्ष्यात्मा कर्तृकरणकार्याऽऽकारेण द्रष्टृदर्शनदृश्याऽऽकारेण च भाति । न हि तत्र साक्षिणं विनाऽन्यत्किंचिदप्यस्ति । यथा च स्वप्ने स्वकल्पितोऽपि राजा स्वनियंता भाति । स्वकल्पितोऽपि पिता स्वोत्पादको भाति । स्वकल्पिता अपि चोराः स्वधनं चोरयन्ति । एवं सर्वेऽपि स्वप्नदृक्कल्पिताः पदार्थाः फलवंत एव भान्ति स्वप्नसमये ।

यदा पुन जागर्ति तदा तु सर्वस्वप्नप्रपंचं मिथ्या बुद्ध्वा यथापूर्वं तिष्ठति स्वयमेक एव यथा ।

तथैवानाद्यनिर्वाच्याज्ञाननिद्रायुतो लोकोऽपीश्वरादिस्था-

वरान्तं सर्वं प्रपञ्चं स्वयमेव कल्पयति ( स्वयमेव लोक आत्मा सर्वाऽऽकारेण विवर्त्तते )। तत्रापि च स्वकल्पितोऽपीश्वरः स्वनियामको भाति। एवमन्येऽपि पदार्थाः स्वकल्पिता अपि सन्तोऽज्ञाननिद्राप्रभावात्तत्फलवंत एव परमार्थसत्या इवैव भान्ति स्वप्नन्यायेनाज्ञाननिद्रायाम्।

यदा पुनर्गुरूपदेशपूर्वकम् "[1]तत्त्वमसि" "[2]सर्वं खल्विदं ब्रह्म तज्जलान्" "[3]आत्मैवेदम्" इत्यादि शास्त्रं विचार्य "[4]अहं ब्रह्मास्मि" इतिज्ञानरूपां जाग्रदवस्थां प्राप्नोति तदा तु स्वकल्पितेश्वरत्वजीवत्वविधिनिषेधादिसर्वातीतः सन्याद्दच्छिक एवावतिष्ठते। तत्र श्रुतिः—

"यत्र लोका न लोका देवा न देवा वेदा न वेदा यज्ञा न यज्ञा माता न माता पिता न पिता स्नुषा न स्नुषा चाण्डालो न चाण्डालः पौल्कसो न पौल्कसः श्रमणो न श्रमणस्तापसो न तापस एकमेव तत्परं ब्रह्म विभाति निर्वाणम्" ( ब्रह्मोपनि० )। इति॥

---

१ ( छा. ६।८।७.)॥ २ ( छा. ३।१४।१ )। ३ ( छा. ८।२५।२ )। ४ ( बृ. १।४।१० )॥

" सर्वाऽऽत्मना स्थितं ब्रह्म सर्वं ब्रह्मात्मना स्थितम् ।
न कार्यं कारणाद्भिन्नमिति वेदान्त डिंडिमः ॥ "

( इति पञ्चम श्लोकव्याख्या ) ॥ ५ ॥

उ० ' शुद्धचिद्धातुरेव स्वाश्रितानाद्यनिवर्चनीयमायामधिष्ठाय तत्पदवाच्येश्वरत्वं यात्यज्ञानदृष्ट्या ज्ञानदृष्ट्या तु सदैकरसश्चिद्घन एवास्ति परमात्मा । ' इत्युक्तमतीतग्रन्थेन । संप्रति तज्ज्ञानाज्ञानयोः फलमुच्यते—

मू० यस्याज्ञानवशादयं हि सकलो बद्धोऽस्ति लोको वृथा
यं ज्ञात्वा च विमुच्यते बुधजनः संसारबन्धात्क्षणात् ॥
आनन्दं निजरूपमेव नचिरात् माप्नोति चाऽऽप्तं पुरा
तं श्रीबालकभारतीयतिमहं वन्दे गुरुं चिद्घनम् ॥ ६ ॥

टी० यस्येति । (२५) यस्य चिद्घनानन्दैकरसस्य परमात्मनोऽज्ञानवशादज्ञानात् । सोऽहमहंस इत्याकारकज्ञानेन विना । अयं सकलः सर्वोऽज्ञो लोको वृथा हि बद्धोऽस्ति । भ्रान्त्यैव वस्तुतो बंधमोक्षादिरहितमपि बद्धोऽस्मीति मन्यते स्वात्मानं न तु वस्तुतो जीवस्यापि बन्धोऽस्ति किं तु भ्रान्तित

एव भाति बन्धः । अन्यथा ज्ञानानिवर्त्यत्वप्राप्तेः । न हि ज्ञानेन सत्यपदार्थस्य निवृत्तिर्भवति ।

तथा च—यथा कश्चिद्राजा निद्रां प्राप्य स्वस्वरूपं विस्मृत्य स्वप्नं पश्यन् ' अहं चोरोऽस्मि मया कस्यचिद्धनं हृतं तेन चैतै राजदूतै र्गृहीतोऽस्मि दुःख्यस्मि ' इत्येवं मन्यते मिथ्यैव स्वम् ।

यदा तु जागर्ति तदा पुनः ' राजाऽहं न चोरोऽस्मि न च दुःख्यस्मि ' इत्येव मन्यते यथा ।

तथैवाज्ञो लोकोऽपि स्वस्वरूपभूतब्रह्मणोऽज्ञानादेव 'अहं बद्धोऽस्मि ' इति मन्यते मिथ्यैव न तु परमार्थतो बद्धोऽस्तीति ' वृथा हि ' इत्यस्यार्थः ।

ननु यदि वस्तुतो बन्धो नास्ति तर्हि गुरुशास्त्रादीनी बन्धनिवृत्तिसाधनानि निष्फलानि । इति चेत् । न । मिथ्या-बन्धस्यापि निवृत्तिस्तु कर्त्तव्यैव । कुतः ? । मिथ्याऽपि बन्धो यावदज्ञानं दुःखदो भाति । यथा निद्रायुक्तं पुरुषं मिथ्याऽपि दुःस्वप्नो दुःखदो भाति तथा ।

अतो मिथ्याबन्धस्यापि निवृत्तेरपेक्षितत्वान्न गुरुशास्त्रा-

दीनि निष्फलानि तज्जन्यज्ञानस्य मिथ्याबन्धस्यापि निवर्त्तकत्वेनेष्टत्वादित्युच्यते—यं ज्ञात्वेति । यं (२६) सच्चिदानन्दं सर्वत्रैकरसम् " एकमेवाद्वितीयम् । " ( छा. ६ । २ । १ ) यो वै भूमा तत्सुखं नाल्पे सुखमस्ति भूमैव सुखं भूमा त्वेव विजिज्ञासितव्यः । " ( छा. ७ । २३ । १ ) " सत्यं ज्ञानमनन्तं ब्रह्म । " ( तै. २ । १ ) " आत्मा वा अरे ! द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनि खल्वरे ! दृष्टे श्रुते मते विज्ञात इद् ँ सर्वं विदितम् ॥ " ( बृह. ४ । ५ । ६ ) इत्यादि श्रुति प्रसिद्धं परमात्मानं ज्ञात्वा ' सोऽहमेव न ततः पृथगस्मि ' इति साक्षात्कारं कृत्वा । बुधजनो ज्ञानी पुरुषोऽपरोक्षज्ञानी भूत्वा । क्षणात्तस्मिन्नेव क्षणे न कालान्तरे यथा स्वप्नबद्धो जागरितकाल एव तथा संसारबन्धाद्विमुच्यते । संसरणं पुनः पुन र्जननं मरणं च संसारः संसार एव बन्धः संसारबन्धस्तस्मात्संसारबन्धाद्विमुच्यते विशेषेण मुच्यते (२७) पुनर्बन्धभ्रान्तिरहितत्वं प्राप्नोतीत्यर्थः । एतेनानर्थनिवृत्तिरुक्ताऽथेदानीं परमानन्दप्राप्तिरुच्यते—(२८) आनन्दमिति । नचिरादिति । नचिराच्छीघ्रं निजरूपमानन्दं प्रत्यग्भूतं ब्रह्मानन्दं चाऽऽप्नोति प्राप्नोति ।

ननु यदि ब्रह्मानन्दं प्राप्नोति पूर्वमसंतमेव जीवस्तर्हि " संयोगा वियोगान्ताः । " इतिन्यायात्कालान्तरे प्राप्याऽऽनन्दावियोगात्पुनर्दुःखी भविष्यतीत्याशंक्योच्यते–(२९) आप्तं-पुरेति । पुरा ज्ञानकालात्पूर्वेऽपि प्राप्तमेव प्राप्नोति निजरूपमित्युक्तत्वात् । नहि निजरूपं कदाचिदप्यप्राप्तं भवति । परिशेषात्तु विस्मृतकण्ठाभरणन्यायेनप्राप्तस्यैव स्वरूपानन्दस्य प्राप्तिर्बोद्धव्या । पुरा विस्मृतं परब्रह्मभूतनिजरूपं यथावज्जानातीत्यभिप्रायः । अतो न तद्वियोगशंका सावकाशेति भावः । संसारबन्धानर्थस्यापि निवृत्तस्यैव निवृत्तिरित्युक्तं निद्रितराजदृष्टान्तेन " वृथा हि " इत्यस्यव्याख्याने ।

तदेवं संसारबन्धानर्थनिवृत्ति र्निजानन्दप्राप्तिश्चोक्ता । तदेव मोक्षस्वरूपं भवति । तथा च संसारबन्धभ्रान्तिनिवृत्तेः । विस्मृतस्वरूपस्मृत्तेश्च [1]जीवन्मुक्तो भवतीति समग्रार्थः । तमित्यादिकं व्याख्यातम् ॥

" ज्ञानाज्ञाने पदार्थौ द्वावात्मनो बन्धमुक्तिदौ ।
ज्ञानान्मुक्तिर्निबन्धोऽन्यादिति वेदान्तडिंडिमः ।

( इति षष्ठ श्लोक व्याख्या ) ॥ ६ ॥

---

१ अयं ४–प्रयोजननिर्देशः ।

उ० एवं तत्पदवाच्यार्थमुक्त्वा । लक्ष्यार्थकथनपूर्वकं लक्ष्यार्थज्ञानाज्ञानयोः फलं चोक्तम् । अथाधुना त्वं पदस्वरूपमुच्यते—

**मू० तामाश्रित्य चिदंशरूपपुरुषोऽविद्यां स जीवो भवेत्**
**स्वात्मानं च ततो ह्यसौ परवशं मत्वा करोत्युद्यमम् ॥**
**कृत्वा कर्म च तत्फलाय परमं देवं पुनः स्तौति यं**
**तं श्रीबालकभारतीयतिमहं वन्दे गुरुं चिद्घनम् ॥ ७॥**

टी० तामिति । तां [1]पूर्वोक्तां (३०) मलिनसत्त्वामविद्यामाश्रित्य चिदंशरूपपुरुषो यो वर्त्तते स जीवो भवेदित्यन्वयः। चितश्चेतनस्य विभोरंशरूपोंशभूतः पुरुषः पुरिशयः । व्यष्टिशरीरगतेन व्यष्टिशरीरकारणेनाविद्यांशेनावच्छिन्नश्चैतन्यैकदेश इति यावत् । अंश इवांशो महाकाशस्येव घटाकाशः । न हि निरवयवस्य विभोः परमात्मनो मुख्योंऽशः संभवति निरवयवत्वादिति बोद्धव्यम् । चिदंशो रूपं स्वरूपं यस्य स चिदंशरूपः । चिदंशरूपश्चासौ पुरुषश्चेति चिदंशपरूपपुरुषः तथा हि—(३१) साऽऽभासांतः करणेन साऽऽभासाविद्यांशेन वा

१ तृतीयश्लोकोक्ताम् ।

विशिष्टो विभुचैतन्यैकदेशो जीवोभवेद्भवति । त्वं पदवाच्यो भवतीत्यर्थः । (३२) तथा साऽऽभासांतःकरणेन साऽऽभासाविद्यांशेन वोपहितो विभुचैतन्यैकदेशमात्रस्त्वं पदलक्ष्यः । इति विवेकः ।

वाचोच्यत इति वाच्यः । लक्षणया लक्ष्यत इति लक्ष्यः । तत्र स्वरूपेण निरंशस्यापि परमात्मनो व्यष्टिशरीरगतव्यष्टयविद्याकार्यान्तः करणावच्छिन्नदेशोंऽश इव भाति तेनासावंश इत्युच्यते । तत्र श्रुतिश्च–" तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् । " ( श्वे० ४ । १० ) इति । किं च सर्वासु पूर्षु शरीरेषु शेतेऽतः पुरुषोऽपि चासावेवोच्यते ।

तत्रापि श्रुतिः—" स वा अयं पुरुषस्सर्वासु पूर्षु पुरिशयो नैनेन किंचनानावृतम् । " ( बृह० २ । ५ । १८ ) इति । अथेदानीमविद्यावशगतस्य यत्फलं भवति तदुच्यते–(३३) ततो हीति ।

यतोऽविद्यामाश्रित्य तयाऽविद्ययाऽपहृतज्ञानो भूत्वा वर्त्तते ततो हेतो र्हीवासौ जीवः परमार्थदृष्ट्या स्वतन्त्रोऽपि सन्नविद्यामाहात्म्यात् स्वात्मानं स्वमात्मानं परवशं परस्येशस्य

वशमधीनं मत्वा। अहमसमर्थो जीवः कर्ताभोक्ता पराधीनोऽस्मि ईश्वरस्तु समर्थःस्वतन्त्रः कर्मफलदाता मदन्योऽस्ति। अतो ममास्ति कर्त्तव्यं कर्म तथा कर्मफलदात्रीश्वराराधनं च कर्त्तव्यमेवास्त्यतोऽहं कर्मेशाराधने कृत्वा सुखी भविष्यामिति मत्वा। उद्यमं श्रौतस्मार्तादिकाम्यकर्म करोति। पुनः कर्म कृत्वा तत्फलाय स्वकृतकर्मफलप्राप्तये यं परमं देवं स्तौति तमिति-संबंधः। यं परमं देवं स्वरूपेणाशेषविशेषरहितमपि सन्तं परमात्मानं खलु सर्वज्ञं सर्वशक्तिं कर्मफलदातारं सर्वनियंतारं दयालुमीश्वरं मत्वा यं स्तौति स्तुत्या प्रसन्नं करोत्याराधयति। ततश्च (३४) स्वकल्पनाऽनुसारेण स्वकल्पनाप्रभावेणैव फलमपि लभत इति वाक्यशेषः।

तत्र श्रुतिः—"अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत।" (छा. ३। १४। १) इति। क्रतुः संकल्पः। क्रतुमयः संकल्पमयः। स्पष्टमन्यत्।

तथा—"स यदि पितुलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्ति तेन पितृलोकेन संपन्नो महीयते। अथ

यदि मातृलोककामो भवति संकल्पादेवास्य मातरः समुत्तिष्ठन्ति तेन मातृलोकेन संपन्नो महीयते । अथ यदि भ्रातृलोककामो भवति संकल्पादेवास्य भ्रातरः समुत्तिष्ठन्ति तेन भ्रातृलोकेन संपन्नो महीयते । अथ यदि स्वसृलोककामो भवति संकल्पादेवास्य स्वसारः समुत्तिष्ठन्ति तेन स्वसृलोकेन संपन्नो महीयते । अथ यदि सखिलोककामो भवति संकल्पादेवास्य सखायः समुत्तिष्ठन्ति तेन सखिलोकेन संपन्नो महीयते । अथ यदि गन्धमाल्यलोककामो भवति संकल्पादेवास्य गन्धमाल्ये समुत्तिष्ठतस्तेन गन्धमाल्यलोकेन संपन्नो महीयते । अथ यद्यन्नपानलोककामो भवति संकल्पादेवास्यान्नपाने समुत्तिष्ठतस्तेनान्नपानलोकेन संपन्नो महीयते । अथ यदि गीतवादितलोककामो भवति संकल्पादेवास्य गीतवादिते समुत्तिष्ठतस्तेन गीतवादितलोकेन संपन्नो महीयते । अथ यदि स्त्रीलोककामो भवति संकल्पादेवास्य स्त्रियः समुत्तिष्ठन्ति तेन स्त्रीलोकेन संपन्नो महीयते । यं यमन्तमभिकामो भवति यं कामं कामयते सोऽस्य संकल्पादेव समुत्तिष्ठति तेन संपन्नो महीयते ॥" ( छा. ८ । २ । १–१० ) इत्यादिश्रुतिभ्यः स्वकल्पनामात्रमेव कर्तृत्वभोक्तृत्वदातृत्वकर्मतत्फलादिविशिष्टं सर्वं जग-

ज्जातं (३५) भातीति सिद्धम् । इत्यतो निर्विशेषं सन्तमेव परमात्मानमीश्वरात्मना कल्पयति जीवः । स्वमपि निर्विशेषं सन्तमेव जीवात्मना कल्पयति स्वयमेव । ततश्चोक्तस्वप्नन्यायेन स्वकल्पितेश्वराधीनोऽपि भवति । तदाज्ञानुरोधेन सुखी दुःखी च भवति । वस्तुतस्तु यादृगस्ति तादृगेवास्ति चिदेकरसो जीवत्वेश्वरत्वादिशून्य इति सिद्धान्तः । तमित्यादि व्याख्यातार्थम् ॥

" अविद्योपाधिको जीवो मायोपाधिक ईश्वरः ।
मायाविद्यागुणातीत इति वेदान्तडिंडिमः ॥ "

" न जीवब्रह्मणोर्भेदः पिंडब्रह्मांडभेदतः ।
व्यष्टेः समष्टेरेकत्वादिति वेदान्तडिंडिमः ॥ "

( इति सप्तमश्लोक व्याख्या ) ॥ ७ ॥

उ० तदेवं त्वंपदलक्षणमुक्त्वाऽधुना परमात्मनो गुरुरूपेणाऽऽविर्भावे हेतुरुच्यते—

मू० दृष्ट्वा भ्रान्तिवशाच्च तं भययुतं भूत्वा कृपासंयुतो
ज्ञानादन्य उपाय एव भुवि ते मोक्षस्य भो जीव नो ॥
वक्तुं चेत्थममुयो विचार्य नृतनुं धृत्वा म आहोक्तिमों२
तं श्रीबालकभारतीयतिमहं वन्दे गुरुं चिद्घनम् ॥८॥

टी० दृष्ट्वेति । (३६) तं पूर्वोक्तं जीवं भ्रान्तिवशात्स्वरूपाज्ञानाद्भययुतं दृष्ट्वा । 'जन्ममरणादिदुःखपरंपरारूपसंसारनाशोपायमलभमानम् "कथं न्वहमस्मात्संसारदुःखान्मुक्तो भवेयम्" इत्येवं भीतं दृष्ट्वा । कृपासंयुतो भूत्वाऽहो चित्रमेतद्यत्स्वस्वरूपेण दुःखसंयोगविधुरोऽपि सन्स्वाज्ञानवशाद्वृथैव दुःखीव भवतीति दयायुक्तो भूत्वा । यः परमात्मा " भो जीव ! भुवि संसारे ते तव मोक्षस्य ज्ञानादन्य उपाय एव नो " इत्थमेवं वक्तुं विचार्य नृतनुं धृत्वा मे मह्यमुक्तिमाह तमित्यन्वयः । ॐकारोऽष्टकसमाप्तिवाचकः । हे जीव ! प्राणाभिमानिन् ! हेतुगर्भितं संबोधनम् । तथा हि—यतः प्राणधारणात् प्राणाभिमानात् । प्राणोपलक्षितप्राणेंद्रियदेहादिषु खल्वनात्मस्वात्मत्वाहंकारं कृत्वा स्वरूपं विस्मृत्य भ्रान्त्यैव जीवभावं प्राप्तोऽसि । अत एव भ्रान्तिविरोधिज्ञानादन्यः कश्चिदपि ते मोक्षस्योपायो नास्त्येव । कुतः । यतो मनोबुद्धिप्राणदेहादिष्वनात्मसु भ्रान्त्याऽऽत्मत्वबुद्धिर्हि (३७) बन्ध इत्युच्यते ।

---

१ अयं स्वरूपाध्यासनिर्देशः

२ अयं संसर्गाध्यासनिर्देशः

तन्निवृत्तेः स्वरूपावस्थानरूपो (३८) मोक्षो भवति। तन्निवृत्ति श्च तद्विरोधज्ञानेन (३९) विना न भवति। यथा भ्रान्तिजन्यरज्जुसर्पनिवृत्ति र्न रज्जो र्यथार्थज्ञानेन विना भवति परंतु रज्जो र्यथार्थज्ञानादेव भवति। एवमत्रापि बोद्धव्यम्। तत्र श्रुतयः—

" यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः। तदा देवमविज्ञाय दुःखस्यान्तो भविष्यति ॥ " (श्वे. ६ । २०)

" न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशुः॥" (कै. १। २) " ज्ञात्वा तं मृत्युमत्येति नान्यः पन्था विमुक्तये ॥ " (कै. १ । ९) " तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय ॥ " (श्वे. ३ । ८)

" सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि। संपश्यन्ब्रह्म परमं याति नान्येन हेतुना ॥ " (कै. १ । १०)

" तद्ब्रह्माहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यते ॥ "(कै.१।१७)

" तरति शोकमात्मवित्। " (छा. ७ । १ । ३)

" भिद्यते हृदयग्रन्थि श्छिद्यंते सर्व संशयाः।

क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥ "
( मुं. २ । २ । ८ )

" नास्त्यकृतः कृतेन । " ( मुं. १ । २ । १२ )

इत्याद्याः सहस्रशः श्रुतयो ज्ञानादेव मोक्षमाहुः । अतो ज्ञानादन्यस्ते मोक्षस्योपायो नास्त्येवेत्थं वक्तुं कथयितुं विचार्य यः परमात्मा नूतनं मानुषदेहं धृत्वा श्रीबालकभारतीति नाम्ना प्रसिद्धेन नरदेहेन दक्षिणामूर्त्याकारेण विशेषरूपेणाऽऽविर्भूय मे मह्यं हरदेवभारत्याख्याय: केवलभ्रान्तिवशादेव प्राप्तजीवभावाय शिष्याय । उक्तिं वाचम् " तत्त्वमसि " इत्यादिमहावाक्यरूपां जीवब्रह्मैक्यज्ञानपरां युक्तिसहिताम् । आहोक्तवान् । ॐमिति पदमष्टकसमाप्तिवाचकम् । " इत्थमु " इत्यत्रोकारोऽवधारणार्थो निपातः । तेन चेत्थं वक्तुमेव गुरुरूपेणावतारः परमात्मनो नान्यप्रयोजनायेत्युक्तं भवति । तमित्यादि व्याख्यातम् ॥

अयं भावः—स्वरूपेणाशेषविशेषातीतो जीवेश्वरभावशून्योऽपि सन्परमात्मा स्वाश्रितानिर्वचनीयमायाप्रभावेण सविशेषवद्भाति । तत्र मायाशक्तेर्द्विविधत्वं शुद्धसत्त्वमलिनसत्त्व-

भेदेनोक्तम् । तत्र शुद्धसत्त्ववत्यां मायायां प्रतिबिंबितचिदाभासः सर्वज्ञत्वसर्वशक्तित्वादिधर्मवान्भवति । तस्यामेव मलिनसत्त्ववत्यां प्रतिबिंबितचिदाभासोऽल्पज्ञत्वाल्पशक्तित्वादिधर्मवान्भवति । तत्र शुद्धसत्त्वा समष्टिरूपा (४०) मायैकैव भवति । अतस्तत्राऽऽभासोऽपि समष्टिरूप एक एव भवति । अथ (४१) मलिनसत्त्वा त्वंशभेदेनानेकशाखा भवति । अत एव तत्र प्रतिबिंबिताश्चिदाभासा अपि प्रतिशाखासु प्रतिबिंबिता असंख्या भवन्ति । (४२) अथ तत्र शुद्धोपाधिगत सर्वज्ञत्वसर्वशक्तित्वादिगुणकश्चिदाभास उपास्यभावं भजते। (४३) मलिनोपाधिगतोऽल्पज्ञत्वाल्पशक्तित्वादिगुणकश्चिदाभास उपासकभावं भजते। (४४) उपाविद्वयाधिष्ठानचेतनस्तु सदैकरसः सर्वज्ञत्वाल्पज्ञत्वादिसर्वविकारशून्य एव स्थितः । (४५) इत्यत ईश्वरत्वजीवत्वकर्तृत्वकारयितृत्वभोक्तृत्वदातृत्वसर्वज्ञत्वाल्पज्ञत्वबद्धत्वमुक्तत्वजगदुत्पत्तिस्थितिलयकर्तृत्वगुरुत्वशिष्यत्वादयः सर्वेऽपि धर्माः समष्टिव्यष्टिशुद्धमलिनोपाधिगतचिदाभासस्यैव सन्ति नाधिष्ठानस्य ।

(४६) तथाऽपि [1]मायाऽऽभासयोरधिष्ठानसत्ताव्यतिरेकेण

---

१ अत्र मायापदमविद्याया अप्युपलक्षणम् ।

स्वतः सत्ताशून्यत्वात्तयोरधिष्ठानभिन्नवस्तुत्वाभावादधिष्ठानमेव सर्वप्रकारेण विवर्त्तते तद्भिन्नवस्तुनोऽभावादिति सिद्धान्तः । अत एवास्मिन्संग्रहग्रन्थे सर्वरूपेण ब्रह्मैव भवतीत्युक्तम् ॥

तथा हि विवर्त्तवादावष्टम्भेन श्रुती चाऽऽहतुः—

" पुरमेकादशद्वारमजस्यावक्रचेतसः । अनुष्ठाय न शोचति विमुक्तश्च विमुच्यते ॥ एतद्वैतत् ॥ " ( क. २।२।१ )

" हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् ॥ " ( क. २ । २ । २ ) इति । ऋ. ३ । ७ । १४ । ५ ।

अथ श्रुत्यर्थः—पुरम् । पुरमिव पुरम् । द्वारपालाधिष्ठात्राद्यनेकपुरोपकरणसंपत्तिदर्शनाच्छरीरं पुरम् । पुरं च सोपकरणं स्वात्मनाऽसंहतस्वतन्त्रस्वाम्यर्थं दृष्टम् । तथेदं पुरसामान्यादनेकोपकरणसंहतं शरीरं स्वात्मनाऽसंहतराजस्थानीयस्वाम्यर्थं भवितुमर्हति । तच्चेदं शरीराख्यं पुरमेकादशद्वारम् । एकादशद्वाराण्यस्य सप्त शीर्षण्यानि नाभ्या सहार्वाञ्चि त्रीणि शिरस्येकं तैरेकादशद्वारं पुरम् । कस्य । अजस्य जन्मादिवि-

गुर्वष्टकमद्वैतार्थप्रकाशिकया मणिदीपिकया व्याख्यया सहितम्।

क्रियारहितस्याऽऽत्मनो राजस्थानीयस्य पुरधर्मविलक्षणस्य। पुनः कथं भूतस्य। अवक्रचेतसः। अवक्रमकुटिलमादित्यप्रकाशवन्नित्यमेवावस्थितमेकरूपं चेतो विज्ञानमस्येत्यवक्रचेतास्तस्यावक्रचेतसो राजस्थानीयस्य ब्रह्मणः। यस्येदं पुरं तं परमेश्वरं पुरस्वामिनमनुष्ठाय ध्यात्वा। ध्यानं हि तस्यानुष्ठानं सम्यग्विज्ञानपूर्वकम्। तं सर्वैषणाविनिर्मुक्तः सन्समं सर्वभूतस्थं ध्यात्वा न शोचति। तद्विज्ञानादभयप्राप्तेः शोकावसराभावात्कुतो भयेक्षा। इहैवाविद्याकृतकामकर्मबन्धनैर्विमुक्तो भवति। विमुक्तश्च सन्विमुच्यते पुनः शरीरं न गृह्णातीत्यर्थः।

एतद्वै तत्। तत्किम्। यन्नचिकेतसा पृष्टं ( क. १। १। २० ) देवादिभिरपि विचिकित्सितं ( क. १।१।२१ ) त्वंपदलक्ष्यम्। धर्मादिभ्योऽन्यत् ( क. १। २। १४ ) तत्पदलक्ष्यं विष्णोः परमं पदं यस्मात्परं नास्ति तद्वा एतत् ॥

स तु नैकशरीरपुरवर्त्येवाऽऽत्मा। किं तर्हि। सर्वपुरवर्ती। कथम्। हन्ति गच्छतीति हंसः। शुचौ दिव्यादित्याऽऽत्मना सीदति गच्छतीति शुचिषत्। सर्वान्वासयतीति वसुः। वाय्वात्मनाऽन्तरिक्षे सीदति गच्छतीत्यन्तरिक्षसत्। होताऽग्निः

" अग्निर्वै होता " इति श्रुतेः । वेद्यां पृथिव्यां सीदतीति वेदिषत् " इयं वेदिः परोऽन्तः पृथिव्याः " ( या यज्ञे प्रसिद्धेय वेदिः सा वेदिः पृथिव्याः परोऽन्तः परस्स्वभावः ) इत्यादिमन्त्रवर्णात् । अतिथिःसोमः सन्दुरोणे कलशे सीदतीति दुरोणसत् । ब्राह्मणोऽतिथिरूपेण दुरोणेषु यज्ञगृहेषु सीददीति वा दुरोणसत् । नृषु मनुष्येषु सीदतीति नृषत् । वरेषु देवेषु सीदतीति वरसत् । ऋतं सत्यं यज्ञो वा तस्मिन्सीदतीत्यृतसत् । व्योम्न्याकाशे सीदतीति व्योमसत् । अप्सु शंखशुक्तिमकरादिरूपेण जायत इत्यब्जाः । गवि पृथिव्यां व्रीहियवादिरूपेण जायत इति गोजाः । यज्ञांगरूपेण जायत इत्यृतजाः । पर्वतेभ्यो नद्यादिरूपेण जायत इत्यद्रिजाः । सर्वोऽऽत्माऽपि सन्नृतमवितथस्वभाव एव । बृहन्महान्सर्वकारणत्वात् ।

यदाऽप्यादित्य एव मन्त्रेणोच्यते तदाऽप्यस्याऽऽत्मस्वरूपत्वमादित्यस्याङ्गीकृतत्वाद्ब्राह्मणव्याख्यानेऽप्यविरोधः । तथा च सर्वव्याप्येक एवाऽऽत्माजगतो नाऽऽत्मभेद इति मन्त्रार्थः ॥

अथ च विवर्त्तवादपरा गौडपादीयकारिका—

" कल्पयत्यात्मनाऽऽत्मानमात्मा देवः स्वमायया । स एव

बुध्यते भेदानिति वेदान्तनिश्चयः ॥ " ( गौ. २ । १२ ) इति । अतः परमात्मैव सर्वाऽऽकारशून्योऽपि सन् स्वयमेव सर्वाऽऽकारेण विवर्त्तते¹ तदतिरिक्तवस्त्वभावादिति सिद्धम् । इत्यतोऽविद्वद्दृष्टिमनुसृत्य विवर्त्तवादावष्टम्भेनास्मिन्ग्रन्थेऽप्युक्तः परमात्मैव तत्तदाकारेण भवतीति । वस्तुतस्तु न केनाप्याकारेण भवति विभुः । तत्र श्रुतिः—

" न निरोधो न चोत्पत्तिर्न बन्धो न च शासनम् । न मुमुक्षा न मुक्तिश्च इत्येषा परमार्थता ॥ " ( ब्रह्मबिंदूप. १० )

इति । अतः सर्वमनवद्यमेवेति मन्तव्यम् ॥

(४७) (अथ " म आहोक्तिम् " इत्यस्यव्याख्यानम्)

तत्र " उक्तिं महावाक्यरूपां युक्तिसहितामाह " इति सामान्यरूपेणाक्षरार्थे व्याख्यातम् । तत्र महावाक्यशब्देन श्रुतयो गृह्यन्ते। तेन च श्रुतियुक्तिसहितामुक्तिमाहेति सिद्धम् । तत्र काः श्रुतयः काश्च युक्तयः ? । इति जिज्ञासायां श्रुतयो युक्तयश्चोच्यन्ते । तत्राऽऽदौ श्रुतयः उच्यन्ते—

---

१ विवर्त्तत इति सिद्धम् । ( इत्यन्वयः )

(४८) ( अथ श्रुत्युपदेशप्रकारः )

१ " (४९) प्रज्ञानं ब्रह्म " ( ऋ. एत. आ. अ. ६ उ. अ. ३ खं. ५ श्रु. ३ )

२ " अहं ब्रह्मास्मि " ( य. बृह. १ । ४ । १० )

३ " तत्त्वमसि " ( सा. छा. ६ । ८ । ७ )

४ " अयमात्मा ब्रह्म " ( अ. मा. २ )

" सर्वं खल्विदं ब्रह्म तज्जलान् " ( छा. ३ । १४ । १ )

इत्याद्यनेकसहस्रशो ब्रह्मजीवजगदैक्यप्रतिपादिकाः श्रुतयः सन्ति । अथ श्रुतीनामर्थः—तत्र

१ " (५०) प्रज्ञानं ब्रह्म " इत्यस्यर्ग्वेदमहावाक्यस्यार्थः-प्रकृष्टं ज्ञानं प्रज्ञानम् । अन्तःकरणोपहितचैतन्यमित्यर्थः ।

तथा हि—श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणाख्यानामिन्द्रियाणां वृत्त्युपहितेन येन चैतन्येन शब्दस्पर्शरूपरसगन्धानां ज्ञानानि भवन्ति तच्चैतन्यं ' प्रज्ञानम् ' इत्युच्यते ।

आभासचैतन्यं त्वधिष्ठानचैतन्याधीनं न स्वतन्त्रमतः साभासान्तःकरणाधिष्ठानचैतन्यमेव प्रज्ञानशब्दार्थः । ......

तत्र श्रुतिः—

" येनेक्षते शृणोतीदं जिघ्रति व्याकरोति च ।
स्वाद्वस्वादु विजानाति तत्प्रज्ञानमुदीरितम् ॥ "

( शुकरहस्योपनिषदि द्वितीयसंख्यायां १ प्रथमश्रुतिः ) येन चक्षुरादिद्वारा निर्गतान्तःकरणवृत्त्युपहितचैतन्येनेदं दृश्यजातमीक्षते शृणोति जिघ्रति व्याकरोति विजानाति च लोकस्तचैतन्यं प्रज्ञानमुदीरितमुच्चैः संशयविपर्ययरहितैर्महावाक्यैरीरितं कथितमित्यन्वयः तथा च व्यष्ट्युपाधिविशिष्टचैतन्यं प्रज्ञानंपदवाच्यार्थः। व्यष्ट्युपाध्युपहितचैतन्यमात्रं तु प्रज्ञानंपदलक्ष्यार्थ इति विवेकः।

अथ ब्रह्मादिस्थावरान्तेषु यदेकं चैतन्यमस्ति तच्चैतन्यं ब्रह्मेत्युच्यते। तथा हि—समष्ट्युपाधिविशिष्टचैतन्यं ब्रह्मपदवाच्यार्थः। समष्ट्युपाध्युपहितमनुपहितं च चैतन्यमात्रं देशकालवस्तुपरिच्छेदरहितं यदस्ति तत्तु ब्रह्मपदलक्ष्यार्थ इति विवेकः।

तथा च सति। उपाधिकृतभेदमन्तरेण न स्वरूपे भेदोऽस्त्यतः प्रज्ञानं चैतन्यं ब्रह्मचैतन्यमेव न ततोऽन्यदिति वाक्यार्थः। तत्र श्रुतिः—

गुर्वष्टकमद्वैतार्थप्रकाशिकया मणिदीपिकया व्याख्यया सहितम् ।

" चतुर्मुखेन्द्रदेवेषु मनुष्याश्वगवादिषु । चैतन्यमेकं ब्रह्मातः प्रज्ञानं ब्रह्म मय्यपि ॥ " ( शुक. २ ) इति ॥ १ ॥

२ अथ " (५१) अहं ब्रह्मास्मि " इत्यस्य यजुर्वेद-महावाक्यस्यार्थः—( अहं पदार्थः ) देशकालवस्तुपरिच्छेद-रहितब्रह्मपरमात्मैवास्मिन्देहे बुद्धिसाक्षितया स्फुरन्सूक्ष्मदेहोप-हितः सन्नहमित्युच्यते । तथा हि—व्यष्ट्युपाधिविशिष्टचैतन्यम् ' अहम्–' पदवाच्यार्थः । व्यष्ट्युपाध्युपहितचैतन्यमात्रम् ' अहम्–' पदलक्ष्यार्थ इति विवेकः ।

तत्र श्रुतिः—" परिपूर्णः पराऽऽत्माऽस्मिन्देहे विद्याऽधि कारिणि । बुद्धेः साक्षितया स्थित्वा स्फुरन्नहमितीर्यते ॥ " ( शुक. २ ) इति ।

( अथ ब्रह्मपदार्थः ) देशकालाद्यनवच्छिन्नः सर्वत्र स्वतः परिपूर्णः परमात्मा ' ब्रह्म ' इत्युच्यते । तथा हि—समष्टि-मायोपाधिविशिष्टचैतन्यम् ' ब्रह्म–' पदवाच्यार्थः ।

मायारहितचिदेकरसाविभुचैतन्यमात्रं तु ' ब्रह्म–' पद-लक्ष्यार्थ इति विवेकः । तथा च सति । उपाधिकृतभेदमन्तरेण न स्वरूपे भेदोऽस्त्यतोऽहं व्यष्ट्युपाध्युपहितचैतन्यमात्रं परमा-

र्थतो ब्रह्मैवास्मि नान्यदिति वाक्यार्थः ।

तत्र श्रुतिः—" स्वतः पूर्णः पराऽऽत्माऽत्र ब्रह्मशब्देन वर्णितः । अस्मीत्यैक्यपरामर्शस्तेन ब्रह्म भवाम्यहम् ॥ " (शुक-रहस्योपनि. ४ ) इति । अत्र महावाक्ये स्पष्टमन्यत् ॥ २ ॥

३ अथ " (५२) तत्त्वमसि " इत्यस्य सामवेदमहावाक्यस्य व्याख्यानम्—( तत्पदार्थः ) " सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् " ( छा. ६ । २ । १ ) इति श्रुत्या सृष्टेः पुरा स्वगतादिभेदशून्यं नामरूपरहितं यत्सद्वस्तु प्रतिपादितमस्ति तद्वस्तुनोऽधुनाऽपि सृष्ट्युत्तरकालेऽपि परमार्थदृष्ट्या तादृक्त्वं तदित्युच्यते । तथा हि—मायारूपसमष्ट्युपाधिविशिष्टविभुचैतन्यं तत्पदवाच्यार्थः । केवलं विभुचैतन्यं तु तत्पदलक्ष्यार्थ इति विवेकः ।

तत्र श्रुतिः—" एकमेवाद्वितीयं सन्नामरूपविवर्जितम् । सृष्टेः पुराऽधुनाऽप्यस्य तादृक्त्वं तदितीर्यते ॥ " ( शु. रह. ५ ) इति । ( अथ त्वंपदार्थः )

श्रोतुः शरीरत्रयसाक्षितयाऽवस्थितं शरीरत्रयविलक्षणं यत्सद्वस्त्वस्ति तत्सद्वस्त्वेवात्र महावाक्ये ' त्वम् ' इत्युच्यते ।

तथा हि—तदेव विभुचैतन्यं व्यष्टिसंघातविशिष्टं सत्त्वं-पदवाच्यार्थः । व्यष्टिसंघातोपहितचैतन्यमात्रं तु ' त्वम् '—पदलक्ष्यार्थ इति विवेकः । तथा च सति । उपाधिद्वयकृत-भेदमन्तरा न सच्चिदानन्दरूपवस्तुस्वरूपे भेदोऽस्तीत्यसिपदे-नैकता ग्राह्यते । इति वाक्यार्थः ।

तत्र श्रुतिः—" श्रोतुर्देहेन्द्रियातीतं वस्त्वत्र त्वंपदेरितम् । एकता ग्राह्यतेऽसीति तदैक्यमनुभूयताम् ॥ " ( शुकरहस्योप. ६ ) इति ॥ ३ ॥

४ अथ " (५३) अयमात्मा ब्रह्म " इत्यस्याथर्ववेद-महावाक्यस्यार्थः—( तत्रायमात्मेत्यस्यार्थः ) अहंकारादिदेहा-न्तसंघातस्य यः स्वप्रकाशत्वेनापरोक्षोऽधिष्ठानचिद्धातुः सोऽय-मित्युच्यते । स एवाऽन्तरःसर्वस्मादित्यात्मेत्युच्यते । तथा हि—व्यष्टिसंघातविशिष्टचैतन्यं स्वप्रकाशत्वेनापरोक्षत्वादयं-पदवाच्यार्थः ।

तदेवाऽऽन्तरत्वाद्विभुत्वाच्चाऽऽत्मपदवाच्यार्थः । अथ तदेव तु विशेषणभागं हित्वा केवलचैतन्यम् ' अयमात्मा ' इत्यस्य ( पदद्वयस्य ) लक्ष्यार्थ इति विवेकः ।

तत्र श्रुतिः—"स्वप्रकाशापरोक्षत्वमयमित्युक्तितो मतम् अहंकारादिदेहान्तात्प्रत्यगात्मेति गीयते ॥" ( शुकरहस्योप-नि. ७ ) इति । घटादिवद्दृश्यत्वमद्रष्टादिवन्नित्यपरोक्षत्वं च व्यावर्त्तयितुम् 'स्वप्रकाशापरोक्षत्वम्' इत्यत्र स्वप्रकाशत्वमपरोक्षत्वं चेति विशेषणद्वयमिति बोद्धव्यम् ।

यतोऽहंकारादिदेहान्तात्प्रत्यगान्तरोऽत आत्मेति गीयते कथ्यते महावाक्यइत्यन्वयः । अहंकार आदिर्यस्य प्राणमन-इन्द्रियदेहसंघातस्य सोऽहंकारादिस्तथा देहोऽन्तो यस्योक्त-संघातस्य स देहान्तोऽहंकारादि श्चासौ देहान्तश्चेत्यहंकारादि-देहान्तस्तस्मादहंकारादिदेहान्तात्संघाताद्यतः प्रत्यगधिष्ठानतया साक्षितया चाऽऽन्तरोऽत आत्मेति गीयतेऽस्मिन्महावाक्य इत्यर्थः ।

( अथ ब्रह्मपदार्थः ) दृश्यमानस्य विवर्त्तरूपस्य सर्व-जगतोऽधिष्ठानं देशकालवस्तुपरिच्छेदशून्यं सच्चिदानन्दघनव-स्त्वत्र ब्रह्मेत्युच्यते । तथा हि-समष्टिमायाविशिष्टचैतन्यं ब्रह्मपद-वाच्यार्थः । स्वतः सबाह्याभ्यन्तरपरिपूर्णं निरस्ताशेषविशेषं स्वप्रकाशैकरसघनकेवलचैतन्यं ब्रह्मपदलक्ष्यार्थं इति विवेकः ।

तथा च सति समष्टिमायां तत्कृतसर्वज्ञत्वसर्वशक्तित्वादिकार्यं च हित्वा तथैव व्यष्टयविद्यां तत्कृताल्पज्ञत्वाल्पशक्तित्वादिकार्यं च त्यक्त्वोभयत्र वस्तुमात्रे न भेदोऽस्त्यतोऽयं सर्वस्याऽऽत्मत्वादेवापरोक्षानुभवरूपो य आत्माऽस्ति सोऽयमात्मा ब्रह्मैवाऽस्ति नाऽऽत्मब्रह्मपदलक्ष्यभेद आत्मभेदे ब्रह्मणः परोक्षत्वजडत्वाऽऽपत्ते र्ब्रह्मभेदे चाऽऽत्मनः परिच्छिन्नत्वाऽऽपत्तेरिति वाक्यार्थः।

तत्र श्रुतिः—"दृश्यमानस्य सर्वस्य जगतस्तत्त्वमीर्यते। ब्रह्मशब्देन तद्ब्रह्म स्वप्रकाशात्मरूपकम्॥" (शुकरहस्योपनि. ८) इति। इति चतुर्णां महावाक्यानामर्थः॥ ४॥

अथ "सर्वं (५४) खल्विदं ब्रह्म तज्जलान्" इत्यस्या अर्थः—इदं नामरूपविकृतं प्रत्यक्षादिविषयं समस्तं जगद्ब्रह्मैव। कुतः?। तज्जलान् (तज्जलानम्) अवयवलोपश्छान्दसः।

तथा हि—तस्माद्ब्रह्मणो जायते विवर्त्तरूपेण स्वप्नद्रष्टुरिव स्वप्नजगद्रज्ज्वादि। इति तज्जम्। तथा तस्मिन्नेव ब्रह्मणि लीयते तज्ज्ञानात्तदात्मतयाऽऽश्लिष्यते स्थाणुज्ञानात्पुरुषस्येवेति तल्लम्। तथा तस्मिन्नेव ब्रह्मणि स्थितिकालेऽनिति प्राणिति

चेष्टते समुद्रे तरङ्गवदिति तदनम्। तज्जं च तलं च तदनं च तज्जलानम्। तथा च—यत इदं तज्जलानमतो ब्रह्मेवेदं सर्वं कल्पितस्याधिष्ठानमन्तरेण वस्तुत्वाभावादिति संक्षेपः। अत्रेदं रहस्यम्—आरोप्यस्याधिष्ठानरूपत्वात् 'पुरुषः स्थाणुः। रजतं शुक्तिः। सर्पो रज्जुः।' इत्यादिवत् "सर्वं ब्रह्म" इत्यत्रापि बाधायां सामानाधिकरण्यं कुतः?। रज्जुसर्पादिकल्पस्य जगतो रज्ज्वादिस्थानीयेन ब्रह्मणा सह मुख्यसामानाधिकरण्यासंभवादिति बोद्धव्यम्। (इति श्रुत्युपदेशप्रकारः)

( अथ (५५) युक्त्युपदेशप्रकारः )

अथ (५६) भेदबाधिकाऽभेदसाधिका च या विचारणा सा युक्तिरुच्यते। भेदश्च पञ्चविधः शिष्यबुद्धौ कल्पितोऽस्ति स यथा—(१) (५७) ईशजीवभेदः। (२) जीवानां मिथो भेदः। (३) जीवजडभेदः। (४) ईशजडभेदः। (५) जडानां मिथो भेदश्चेति। तत्र युक्तिरपि पञ्चविधा भवति। सा चैवम्—(५८)—(१) ईशजीवभेदो मिथ्या। साऽऽभासमायानानाऽन्तःकरणरूपोपाधिकृतत्वात् महाऽऽकाशघटाऽऽकाशभेदवत्।

तथा

गुर्वष्टकमद्वैतार्थप्रकाशिकया मणिदीपिकया व्याख्यया सहितम् ।

(२) जीवानां मिथो भेदो मिथ्या । साऽऽभासनानाऽन्तःकरणरूपोपाधिकृतत्वात् । नानाघटाकाशभेदवत् । तथा

(३) जीवजडभेदो मिथ्या । साऽऽभासान्तःकरणनिराभासनामरूपमयोपाधिकृतत्वात् । स्वप्नगतचराचरपदार्थभेदवत् । तथा

(४) ईशजडभेदो मिथ्या । मायानामरूपमयोपाधिकृतत्वात् । स्वप्नद्रष्टृस्वप्नपदार्थभेदवत् । तथा

(५) जडानां मिथो भेदो मिथ्या । नामरूपमयोपाधिकृतत्वात् । रज्ज्वां प्रातिभासिकसर्पदण्डमालाजलधाराभूच्छिद्रादिभेदवत् । इति पञ्चविधायुक्तिः ।

अत्रायं निष्कर्षः—यत्र यत्र " जीवो ब्रह्म " इति प्रयोगो भवति । तत्र जीवो नाम साऽऽभासान्तःकरणविशिष्टचैतन्यं साऽऽभासाविद्यांऽशविशिष्टचैतन्यं वोच्यते । तत्र विशेष्यांशचैतन्यस्य ब्रह्मणा सह (५१) मुख्यसामानाधिकरण्यं भवति " घटाऽऽकाशो महाऽऽकाशः " इतिवत् । विशेषणांशान्तःकरणस्य वाऽविद्यांऽशस्य तु ब्रह्मणा सह बाधाया

सामानाधिकरण्यं भवति " पुरुषः स्थाणुः " इतिवत् । इति विवेकः ।

" जगद्ब्रह्म " इत्यस्यार्थस्तूक्तःपुरा " सर्वं खल्विदं ब्रह्म " इति श्रुतिव्याख्याने ।

( इति युक्त्युपदेशप्रकारः )

तत्र " ( अथ श्रुत्युपदेशप्रकारः ) " इत्यत आरभ्य ' ( इति युक्त्युपदेशप्रकारः ) ' इत्यन्तो ग्रन्थविस्तारः " म आहोक्तिम् " इत्यत्र मूलश्लोकगतस्य ' उक्तिम् ' इतिपदस्य (६०) व्याख्यानरूपोऽस्तीति बोद्धव्यम् ॥

ततश्च " यो मे मह्यं श्रुतियुक्तिरूपामुक्तिं वाचमाहोक्तवांस्तं गुरुं वन्दे " इति संबन्धः ।

तत्र ' वन्दे ' इत्यस्याः क्रियाया अर्थोऽद्वैतपक्षे जीवब्रह्मैक्यभावनारूपः प्रथमश्लोकव्याख्याने सदृष्टांत उक्तः । अद्वैतज्ञानान्तरङ्गोपायत्वात् ।

तथा ' गुरुम् ' इत्यस्य कर्मणोऽर्थः परमात्मोक्तः ॥

अथ मन्दमध्यमाधिकारिबुद्ध्यपेक्षया व्यावहारिककल्प-

तभेदोऽपि गृह्यते स्थूलारुन्धतीन्यायेनाद्वैतज्ञानसिद्धये। अस्मिन्पक्षे तु 'वन्दे' इत्यस्याः क्रियायाः (६१) साष्टाङ्गप्रणामोऽर्थो मनोवाक्कायशुद्धिहेतुत्वात्।

तथा 'गुरुम्' इत्यस्य कर्मणोऽर्थो (६२) देशिकमूर्त्तिरितिबोद्धव्यम्। तत्राष्टावङ्गानि तु —

"१दोर्भ्यां २पद्भ्यां च ३जानुभ्या४मुरसा ५शिरसा ६दृशा।
७मनसा ८वचसा चेति प्रणामोऽष्टांग उच्यते॥" इति भवन्ति। एषोऽर्थोऽपि मन्दमध्यमाधिकारिभ्यामविरुद्धः। अन्तःकरणशुद्धिद्वारा मोक्षमुख्यसाधनस्याद्वैतज्ञानस्योपायत्वात्

उत्तमाधिकारिणे तु पूर्वोक्तोऽभेदभावनारूपोऽर्थ एवोत्तमः साक्षान्मोक्षसाधनत्वादितिभावः।

अथ "अहं ब्रह्म" "सर्वं ब्रह्मैव" इत्याकारकोऽयं जीवजगद्ब्रह्मैक्यविचारोऽपि स्वरूपसाक्षात्कारात्मकसमाधेः प्रागेवोपयुज्यते न (६) चरमावस्थायां तत्र सर्वप्रकारस्य कर्त्तव्यविशेषस्याभावान्निष्प्रयोजनत्वाच्चेति सिद्धान्तः॥

ननु यदि स्वरूपसाक्षात्कारे सति सर्वं कर्त्तव्यजातं नि-

ष्प्रयोजनमेव भवति तर्हि पुराऽपि न किञ्चिदपि कुर्याद्वृथाऽऽयासरूपत्वात् ।

मोक्षस्य च स्वरूपावस्थानात्मकत्वात्स्वरूपस्य च नित्यप्राप्तत्वान्न तत्प्राप्त्यर्थमपि किञ्चित्कर्तव्यं सम्भवति। अतः प्राप्तं गुरुशास्त्रादेः सर्वस्य मोक्षसाधनजातस्याऽऽनर्थक्यम् । ततश्च गुरूपसदनपुरःसराणां श्रवणमनननिदिध्यासनादीनामप्यानर्थक्यमेव । इति चेत् ।

न। कथम् ? । मोक्षात्मकं स्वरूपं नित्यप्राप्तमपि खल्वनाद्यनिर्वाच्याज्ञानमाहात्म्यादप्राप्तकल्पं भवति । अतोऽज्ञाननिवृत्तेरावश्यकत्वात् ।

अज्ञाननिवृत्तिश्च स्वरूपज्ञानादेव भवति । स्वरूपज्ञानं च गुरोःसकाशात्कृतवेदान्तशास्त्रविचारादेव भवति । स विचारश्च यथाविधिगुरूपसदनादे भवति। एवं परंपरयाऽस्माद्वैतत्वनिश्चय उपकारकत्वाद्गुरूपसदनादि सर्वं सार्थमेव मुमुक्षुदशायाम् । अतो न कस्यचिदप्यानर्थक्यम् । तत्र श्रुतिः—

" तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ॥ " ( मुं. १ । २ । १२ ) इति ।

स्मृती अपि—

" तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः॥
यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव।
येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि॥"

(भ. गी. ४। ३४-३५) इति॥

अयमभिप्रायः—यावदज्ञानमूलकसंसारभ्रान्तिस्तावद्भूमिकाऽनुसारेण यथाधिकारं सर्वं कल्पितमप्युपयुज्यते। अतः सर्वमनवद्यमेवेति बोद्धव्यम्।

तत्र भूमिकाः कति सन्ति कीदृश्यश्च सन्तीतिजिज्ञासायां ज्ञानभूमिका उच्यन्ते—

(अथ भूमिकानामानि)

१ (६४) शुभेच्छा २ विचारणा ३ तनुमानसी ४ सत्त्वापत्तिः ५ असंसक्तिः ६ पदार्थभावना ७ तुर्यगाचेति सप्त ज्ञानभूमयः। तत्र श्रुती—

" ज्ञानभूमिः शुभेच्छाख्या प्रथमा समुदाहृता।
विचारणा द्वितीया तु तृतीया तनुमानसी॥

सत्त्वापत्तिश्चतुर्थी स्यात्ततोऽसंसक्तिनामिका ।
पदार्थभावना षष्ठी सप्तमी तुर्यगा स्मृता ॥ "
( महोपनि. ५ । २४-२५ ) इति ॥

( अथ भूमिकालक्षणानि )

१ तत्र विवेकवैराग्यषट्संपत्तिमुमुक्षादिमोक्षसाधनसंपन्नस्य (६५) या—' किमहं मूढ एव स्थितोऽस्मि शास्त्रसज्जनैः प्रेक्षेऽहम् ' इतीच्छा भवति सा प्रथमा भूमिः शुभस्य मोक्षस्येच्छेति ' शुभेच्छा ' इति कथ्यते । तत्र श्रुतिः—"स्थितः किं मूढ एवास्मि प्रेक्षेऽहं शास्त्रसज्जनैः । वैराग्यपूर्वमिच्छेति शुभेच्छेत्युच्यते बुधैः ॥ " ( महोपनि. ५ । २७ ) इति ॥ १॥

२ अथ (६६) पूर्वोक्तशुभेच्छाऽनन्तरं स मुमुक्षुः । यथाविधि गुरूपसत्तिपूर्वकश्रवणमनने करोति ।

(अथ (६७) श्रवणलक्षणम्) तत्र—उपक्रमोपसंहार-१

---

१ यद्वस्तु ग्रन्थाऽऽदौ प्रतिपादितं भवति तस्यैव वस्तुनो ग्रन्थान्तेऽपि यत्प्रतिपादनं तत् "उपक्रमोपसंहाराख्यम्" लिङ्गं भवति । तत्र गूढतात्पर्यावद्योतकं लिङ्गमित्युच्यते ।

अभ्यास[२]–अपूर्वत्व[३]–फल[४]–अर्थवाद[५]-उपपत्तिभिः[६] प्रमाणगतसंशयनाशकैः श्रुतितात्पर्यार्थनिश्चायकैः षड्लिङ्गैःसहाऽऽचार्यमुखात् "वेदान्ता जीवब्रह्मैक्यमेव प्रतिपादयन्ति न भेदम्" इति निश्चयपर्यन्तं वेदान्तपठनम् 'श्रवणम्' भवति । तदनन्तरं पूर्वोक्तप्रकारेण श्रवणेन निश्चितं ब्रह्मात्मैक्यरूपमर्थं दृढीकर्तुं मननं भवति । ( अथ (६८) मननलक्षणम् ) तत्र–

---

२ प्रतिपाद्यवस्तुनः पुनः पुनः कथनम् "अभ्यासः" ।

३ प्रतिपाद्यवस्तुनो वेदान्तव्यतिरिक्तप्रमाणाविषयत्वम् "अपूर्वत्वम्" स्वयं प्रकाशत्वं वा "अपूर्वत्वम्" ।

४ प्रतिपाद्यवस्तुसाक्षात्कारेऽभयत्वामृतत्वादिफलकथनम् "फलम्" तदपि प्राप्यवस्तूपायप्रवृत्ते र्हेतुत्वात् 'लिङ्गम्' उच्यते कुतः ? प्राप्यवस्तुफलश्रवणाद्धि तदुपाये प्रवृत्ति र्भवति ।

५ प्रतिपाद्यवस्तुस्तुतिस्तदन्यवस्तुनिन्दा च "अर्थवादः" अयमपि प्रतिपाद्यवस्तूपायप्रवृत्तेरन्यत्राप्रवृत्तेश्च हेतुः ।

६ श्रोतृबोधसौकर्याय नानादृष्टान्तादियुक्तिभिः प्रतिपाद्यवस्तुप्रतिपादनम् "उपपत्तिः" ।

पूर्वोक्तपञ्चविधया युक्त्या तथाऽन्याभिरपि प्रमेयगतसंशयनाशिनीभि र्नानायुक्तिभिः स्वयमेव श्रुतार्थविचारणम् "मननम्" उच्यते। सैषा श्रवणमननरूपा द्वितीया "विचारणा" भूमिका भवति। तत्र श्रुतिः—

" शास्त्रसज्जनसंपर्कवैराग्याभ्यासपूर्वकम् ।
सदाचारप्रवृत्तिर्या प्रोच्यते सा विचारणा ॥ "

( महोपनि. ५ । २८ ) इति ॥ २ ॥

३ (६९) अथोक्तभूमिकाद्वयानन्तरं विपरीतभावनानाशकं निदिध्यासनं क्रियते । ( अथ निदिध्यासलक्षणम् )

(७०) तत्र—विजातीयानात्मप्रत्ययानन्तरितं सजातीयप्रत्ययब्रह्माकारवृत्तीनां नैरंतर्येण तैलधारावत्प्रवाहीकरणम् ' निदिध्यासनम् ' उच्यते। अनेन खलु या विपरीतभावनाख्या बाह्येष्विन्द्रियार्थेषु सत्यत्वभ्रान्तिनिबन्धना रक्तता सा तनुतां याति ।

अतः सैषा निदिध्यासनरूपा तृतीया भूमिका " तनुमानसी " इत्युच्यते। तत्र श्रुतिः—

" विचारणाशुभेच्छाभ्यामिन्द्रियार्थेषु रक्तता ।
यत्र सा तनुतामेति प्रोच्यते तनुमानसी ॥ "

( महोपनि. ५ । २९ ) इति ॥

अत्रैतद्बोद्धव्यमस्ति—स्वरूपज्ञानस्य (७१) प्रतिबन्धाश्चत्वारः सन्ति ( १ ) विषयाऽऽसक्तिः ( २ ) प्रमाणगतासम्भावना ( ३ ) प्रमेयगतासम्भावना ( ४ ) विपरीतभावना चेति । तत्र ( १ ) विषयाऽऽसक्तिनिवृत्ति (७२) विवेकवैराग्यादिसाधनचतुष्टयपूर्विकायाः शुभेच्छायाः प्रथमभूमे भवति॥

तथा

( २ ) ' (७३) प्रमाणं ( वेदान्ताः ) किं जीवब्रह्मैक्यं प्रतिपादयति किं वा तद्भेदं प्रतिपादयति ' इत्येवं प्रमाणे (वेदान्तेषु) यः संशयः सः ' प्रमाणगतासम्भावना ' उच्यते । सा च पूर्वोक्तलक्षणेन द्वितीयविचारणाभूमिगतेन (७४) वेदान्तश्रवणेन नश्यति ॥ तथा

( ३ ) ' (७५) प्रमेयं ( जीवब्रह्मैक्यम् ) वेदान्तैः प्रतिपाद्यते यत्तत्तथैव सत्यं किं वा जीवब्रह्मभेदोऽपि चान्यशास्त्रेषु श्रूयते स सत्यः ' इत्येवं प्रमेये ( जीवब्रह्मैक्ये ) यः

संशयः सः " प्रमेयगतासम्भावना " उच्यते । सा च पूर्वोक्तलक्षणेन द्वितीयविचारणाभूमिगतेन (७६) मननेन नश्यति ॥

तथा

( ४ ) ' (७७) जीवब्रह्मभेदः सत्यो जगदपि सत्यम् । भेदस्यानुभूयमानत्वात् । वेदान्तातिरिक्तशास्त्रेषु श्रूयमाणत्वाच्च । जगतस्तु दृश्यमानत्वात् । ' इति भावना ' विपरीतभावना ' उच्यते । सा च पूर्वोक्तलक्षणेन तृतीयभूमिरूपेण (७८) निदिध्यासनेन नश्यति ॥

इत्येवं प्रकारेण ज्ञानप्रतिबन्धचतुष्टयनाशद्वारा ज्ञानहेतुत्वाच्छुभेच्छाविचारणातनुमानस्यस्तिस्रो भूमयो ज्ञानबाह्या अपि ज्ञानभूमय उच्यन्त इति भावः ।

ता एताः शुभेच्छाविचारणातनुमानस्यस्तिस्रो भूमयो जाग्रदवस्थारूपाः सन्ति । आसु भेदभावप्रतीते र्जाग्रतीव सद्भावत्वात् ।

एतासु शुभेच्छाविचारणातनुमानसीषु तिसृषु भूमिषु विहरन्पुरुषो मुमुक्षु र्भवति । तत्र श्रुतिः—" भूमित्रयेषु विहरन्मुमुक्षु र्भवति । " ( वराहोपनि. ४ । १ ) इति ।

एतासु तिसृषु भूमिषु विहरन्यो मृत्युमाप्नुयात्स योग-भ्रष्ट उच्यते स च पुन र्मनुष्यदेहमेव प्राप्य तत्रापि प्रयत्नाधिकं कृत्वा पूर्वजन्मभूमिकाऽपेक्षयाऽधिकां भूमिं प्राप्नोति ।

एवमेकस्मिञ्जन्मनि द्वितीये जन्मनि तृतीये वा जन्मनि मुक्त एव भवति न तु भूमिकायां प्रवृत्तः पुरुषः कदाचिदप्यधोगतिं यातीति दिक् ॥ ३ ॥

४ (७९) अथ भूमित्रितयाभ्यासात्प्रतिबन्धाभावे सति शुद्धेऽन्तःकरणे सत्त्वस्याऽऽत्मन आपत्तिः साक्षात्कारो भवति यस्यां सा चतुर्थी " सत्त्वापत्तिः " भूमि र्भवति ।

तत्र श्रुतिः—

" भूमिकात्रितयाभ्यासाच्चित्ते तु विरतेर्वशात् ।
सत्त्वात्मनि स्थिते शुद्धे सत्त्वापत्तिरुदाहृता ॥ "

( महोपनि. ५ । ३० ) इति ।

सैषा चतुर्थी भूः स्वप्नावस्थारूपा भवति । अस्यां जगद्व्यवहारप्रपञ्चो बाधितानुवृत्त्या मिथ्यारूपेणाऽऽभाति । सुप्तोत्थितस्य यथा स्वप्ने दृष्टः प्रपंचः स्मृतिरूपेण भाति तथा ।

अस्यां विहरन्पुरुषो (८०) ब्रह्मविद्भवति। तत्र श्रुतिः— " तुरीयभूम्यां विहरन्ब्रह्मविद्भवति। " ( वराहोपनि. ४। १ ) इति।

अयमर्थः—चतुर्थभूमिं प्राप्य पुरुषो मुक्तो भवति। अत श्चतुर्थभूमौ मृतो न पुनर्जायते। चतुर्थभूमेरारभ्याऽऽसप्तमभूमिपर्यन्ता भूमयस्तु प्रारब्धतारतम्यवशादेकस्मिन्नेव जन्मनि भवन्ति। तत्रापि न सर्वेऽपि पुरुषाः सप्तमभूमिमेव प्राप्नुवन्तीति नियमोऽस्ति किं तु कश्चिच्चतुर्थीमेव प्राप्य म्रियते कश्चित्पञ्चमीं प्राप्य म्रियते कश्चित्षष्ठीं प्राप्य म्रियते कश्चित्तु सप्तमीं प्राप्नोति तत्र चतुर्थभूमेरारभ्याऽऽसप्तमीषु भूमिषु मृतानां सर्वेषां पुरुषाणां न विदेहमुक्तौ विशेषः (भेदः)।

नापि जीवन्मुक्तौ विशेषोऽस्ति। अपि तु जीवन्मुक्तिसुखतारतम्यमस्तीति विवेकः।

तत्रापि चोत्तरोत्तरश्रैष्ठ्यमस्ति। तत्र चतुर्थभूमिकावतो ब्रह्मविद आनन्दे (८१) दृष्टान्तः—

यथा कश्चित्पुरुषः समुद्रतीरे तिष्ठन्सन् यावदेकतः पश्यति तदा केवलं जलमेव भाति। यदा त्वन्यतः पश्यति

तदा खलु पृथिवीवनपर्वतादयोऽनेकपदार्था अपि भान्ति ।

तथैव चतुर्थभूमिगतः पुरुषोऽपि यदा विचारदृष्ट्या पश्यति तदा सच्चिदानन्दप्रत्यगभिन्नास्तिभातिप्रियात्मकब्रह्मैव भाति सर्वत्र ।

यदा तु पूर्वसंस्कारेणोत्थितया जगदाभासाऽऽकारया वृत्त्या पश्यति तदा खलु बाधितानुवृत्त्या जगदपि भाति भर्जितबीजवत् ।

किं च चतुर्थभूमिष्ठः पुरुषो लोकसंग्रहार्थमपि व्यवहाराऽऽभासं कुर्वन्निवाऽऽचरति । यथा रामकृष्णजनकादयः॥४॥

५ (८२) अथ भूमिचतुष्टयाभ्यासाद्रूढसत्त्वचमत्कारा पञ्चमी भूमिः " असंसक्तिः " उच्यते । तत्र संसक्ति र्नामाऽऽभासमात्रेऽपि व्यवहारे या लोकसंग्रहादौ प्रीतिः पुरा चतुर्थभूमावासीत् । साऽपि सर्वत्रैकब्रह्मदृष्टेर्न विद्यते यस्यां भूमौ साऽसंसक्तिः ।

यद्वा संसक्ति र्नाम पूर्वावस्थायां या—' अहो नु शास्त्राऽऽचार्यानुग्रहाद्ब्रह्मात्मैक्यज्ञानप्राप्त्या मुक्तोऽस्मि ज्ञात्वैव

कृतकृत्योऽहं ज्ञानमेव मोक्षसुखदमस्त्यतोऽधुना मया सर्वप्रयत्नेन ज्ञानमेव रक्षणीयम्' इत्येवं रूपा ज्ञाने ज्ञानफले मुक्तौ वा प्रीतिरासीत्। सा प्रीतिरपि 'यदि सर्वत्र सर्वदा सर्वथाऽहमेव बद्धत्वमुक्तत्वादिरहित एकरस एवास्मि तर्हि मत्स्वरूपे मोक्षस्यापि कल्पितत्वात्तत्प्राप्तौ तत्साधनात्मकज्ञानप्राप्तौ वा किमपूर्वत्वं न किमपि कुतः? काल्पितस्य सर्वस्य मदभिन्नत्वान्मत्स्वरूपप्राप्तौ मे किं चित्रं न किमपि' इतिदृष्टेर्न विद्यते यस्यां भूमौ सा पञ्चमी भूमिरसंसक्तिः।

तत्र श्रुतिः—

"दशाचतुष्टयाभ्यासादसंसर्गफला तु या।
रूढसत्त्वचमत्कारा प्रोक्ताऽसंसक्तिनामिका॥"

(महोपनिष. ५।२१) इति। अस्यां भुवि वर्तमानःपुरुषो ब्रह्मविद्वरो भवति। तत्र श्रुतिः—"पञ्चमभूम्यां (८३) विहरन्ब्रह्मविद्वरो भवति।" (वराहोपनि. ४।१) इति। सैषा पञ्चमी भूमिः सुषुप्त्यवस्थारूपा भवति। अस्यां सुषुप्ताविव भेदाभानात्।

अथास्यां भूमौ यद्यपि प्रारब्धवशात्पुरुषः स्वयमेव

व्युत्थाय व्यवहाराऽऽभासं करोति तथाऽपि प्रारब्धस्य श्रेष्ठत्वान्न सर्वदा करोत्यपि तु कदाचिदेव करोति प्रायस्तु निर्व्यापार एव भवति ।

तत्र (८४) दृष्टान्तः—यथा कश्चित्पुरुषः सिद्धिप्रभावेण समुद्रमध्ये सदा वसन्नपि कदाचित्कदाचित्स्वयमेव तीरमागत्याऽऽगत्य किंचिद्गृहीत्वा किंचित्त्यक्त्वा किंचिदुच्छ्रावयित्वा किंचिच्छ्रुत्वा वा पुनः शीघ्रं समुद्रमध्ये निमज्ज्य तत्र वसति पुनश्च यदा कदाचिदागच्छति तदाऽपि किंचिद्व्यवहाराऽऽभासत्वमनुभूय पुनः समुद्रमध्ये निमज्जति ।

—तथैव पञ्चमभूमिष्ठः पुरुषोऽपि सच्चिदानन्दानन्तात्मकब्रह्मसमुद्रमध्ये सर्वदा वसति कदाचित्तु प्रारब्धवशात्पूर्वदशाकृतव्यवहारसंस्कृतान्तःकरणबलेन स्वयमेव स्वरूपभूतब्रह्मसमुद्राद्बहिरिव व्यवहारतीरमागत्येव किंचित्कुर्वन्निव व्यवहाराऽऽभासमनुभूय पुनः समुद्रस्थानीये स्वरूपभूतब्रह्मानन्दे निमग्नो भवति । यथाऽष्टावक्रवसिष्ठागस्त्यादयः ॥ ५ ॥

६ (८५) अथ भूमिपञ्चकाभ्यासादत्यन्ताऽऽत्माऽऽगमतया बाह्यानामाभ्यन्तराणां च पदार्थानां भृशमभावनात्पर-

गुर्वष्टकमद्वैतार्थप्रकाशिकया मणिदीपिकया व्याख्यया सहितम्।

प्रयुक्तेन चिरं प्रयत्नेनावबोधनम् ' पदार्थभावना ' षष्ठी भूः ।

तत्र श्रुती—

" भूमिकापञ्चकाभ्यासात्स्वात्मारामतया दृढम् ।
आभ्यन्तराणां बाह्यानां पदार्थानामभावनात् ॥
परप्रयुक्तेन चिरं प्रयत्नेनावबोधनम् ।
पदार्थभावना नाम षष्ठी भवति भूमिका ॥ "
( महोपनि. ५ । ३२–३३ ) इति ।

अस्यां षष्ठ्यां भूमौ विहरन्पुरुषो (८६) ब्रह्मविद्वरीयान्भवति । तत्र श्रुतिः—
" षष्ठभूम्यां विहरन्ब्रह्मविद्वरीयान्भवति ॥ " ( वराहोपनि. ४ । १ ) इति । सैषा षष्ठी भूमिर्गाढसुषुप्तिरूपा भवति भेदभावस्यात्यन्ताभानात् । षष्ठभूमिष्ठः पुरुषो न स्वयमुत्तिष्ठति किं तु चिरं परप्रेरित एव सुप्तबुद्धवद्व्यवहाराऽऽभासं कुर्वन्निव दृश्यते । तत्र (८७) दृष्टान्तः—

यथा कांचिद्योगसिद्धिं गतः कश्चित्पुरुषः सदा समुद्रमध्ये निमग्न एव वसेत् । कदाचित्पुनः केनचिच्चिरं प्रेरितः सञ्छिरोमात्रं जलाद्बहिष्कृत्य किंचिदुक्त्वा पुनस्तत्रैव प्रविशेत्।

तथैव षष्ठभूमिष्ठः पुरुषोऽपि स्वयं स्वरूपाऽऽनन्दसमुद्रे नित्यनिमग्न एव भवति। कदाचित्पुनः केनचिच्चिरं प्रेरितः सन्किंचित् कुर्वन्निव लोकदृष्ट्या व्यवहाराऽऽभासं कृत्वा पुनः शीघ्रं तत्रैव स्वरूपाऽऽनन्दसमुद्रमध्ये निमग्नो भवति। यथा दत्तात्रेयशुकादयः॥

अत्रैतच्च बोद्धव्यमस्ति—शुभेच्छाविचारणातनुमानसीषु मुमुक्ष्ववस्थासु तिसृषु भूमिषु पुरुषार्थप्रारब्धयोः पुरुषार्थ-प्राधान्यं भवति।

अथ सत्त्वापत्यसंसक्तिपदार्थभावनातुर्यगासु ज्ञान्यवस्थासु चतसृषु भूमिषु तु केवलं प्रारब्धमेवास्ति तथाऽपि। चतुर्थ्यां तु स्वप्नवन्मिथ्या ज्ञात्वाऽपि पुरुषार्थाऽऽभासं करोति स्वयं पुरुष-स्तथाऽन्यान्कारयति च यथार्थतया चतुर्थभूमिकावतः सर्वोऽपि व्यवहारो यथाक्रममेव भवति परन्तु न स पुनर्जन्महेतु भवति मिथ्यात्वेन निश्चितत्वात्।

अथ पञ्चमभूमिगतस्तु यद्यपि प्रारब्धवशाद्व्यवहाराऽऽ-भासं करोति स्वयं तथाऽन्यान्कारयति यथाक्रमं तथाऽपि न

सर्वदा करोति कारयति वाऽपितु मध्ये मध्ये विच्छिद्य विच्छिद्य करोति।

अथ षष्ठभूमिष्ठस्य तु प्रारब्धमप्याभासी भवति। अतो न स्वयं किमपि करोति षष्ठ्यां पुरुषः किंतु परप्रेरित एव करोति जाग्रन्नपि सुप्तवत्।

अथ चतुर्थीपञ्चमीषष्ठीषु तिसृषु भूमिषु वर्तमानाः पुरुषा अपि प्रारब्धवैलक्षण्याद्रागी त्यागी सात्त्विको घोर श्चेति चतुर्विधा भवन्ति तत्र जनकाजातशत्र्वादयो रागिणः। दत्तात्रेयशुकाऽऽदयस्त्यागिनः। जमदग्निपिप्पलादाऽऽदयः सात्त्विकाः। दुर्वासाविश्वामित्रपरशुरामाऽऽदयस्तु घोरा बभूवुः। तेषां प्रारब्धाधीने व्यवहारे भिन्ने सत्यपि न ज्ञाने मुक्तौ वा भेदोऽस्तीति दिक्॥ ६॥

७ (८८) अथ भूमिषट्कचिराभ्यासाद्भेदस्यानुपलम्भनाद्यत्स्वभावैकनिष्ठत्वं सा सप्तमी 'तुर्यगा' भूमि र्भवति।

तत्र श्रुतिः—

" भूमिषट्कचिराभ्यासाद्भेदस्यानुपलम्भनात्।
यत्स्वभावैकनिष्ठत्वं सा ज्ञेया तुर्यगा गतिः॥ "

( महोपनि. ५ । ३४ ) इति । अस्यां सप्तम्यां भूमौ विहरन्पुरुषो (८९) ब्रह्मविद्वरिष्ठो भवति ।

तत्र श्रुतिः—"सप्तमभूम्यां विहरन्ब्रह्मविद्वरिष्ठो भवति" ( वराहोपनि. ४ । १ ) इति ।

सैषा सप्तमी भूमिस्तुर्यावस्थारूपा भवति पूर्वभूमित्रयं जाग्रद्रूपं १ चतुर्थी भूमिः स्वप्नरूपा २ ततो भूमिद्वयं सुषुप्तिरूपं ३ तदपेक्षयाऽस्याश्चतुर्थत्वात् ४ ।

सप्तमभूमिकावतस्तु प्रारब्धमपि न विद्यते । अतः सप्तम भूमिगतः पुरुषो न स्वतो न परप्रेरितो वा व्यवहाराऽऽभासमपि करोति । अपि तु सर्वदा सच्चिदानन्दघनप्रत्यगभिन्नब्रह्मस्वरूपेऽकथ्यलक्षणस्तदाकार एव भवति सर्वभेदप्रत्ययाभावात् । यत्र ह्यहंत्वत्वत्त्वेदंत्वाऽऽदयो भेदप्रत्यया भवन्ति तत्रैव हि व्यवहाराऽऽभासोऽपि भवति । अत्र तु द्वैतप्रत्ययाऽऽभासोऽपि न विद्यते तर्हि व्यवहारस्य तु कोऽवकाशः ? । न कोऽपीति सिद्धान्तः ।

तत्र (९०) दृष्टान्तः—यथाऽलौकिकीं सिद्धिं गतः कश्चित्पुरुषो महासमुद्रतले सदा वसेत् । तं खलु जलस्य

स्वच्छत्वादन्ये जनाः पश्यन्ति च तथाऽपि न ते तत्समीपमपि गन्तुं क्षमा भवन्ति कुतस्तर्हि तं प्रेरयितुं शक्नुयुः ?। अपि तु न शक्नुयुः।

तथैव सप्तमभूमिगतः पुरुषोऽपि नित्यं सच्चिदानन्दघनैकरसे स्वरूपाऽऽनन्दसमुद्रे निमग्न एव भवति तमन्ये पश्यन्तोऽपि न तत्तुल्यदशारूपसमीपमपि गन्तुं शक्नुवन्ति कुतस्तर्हि ते तं व्यवहारे नियोजयितुं शक्नुयुः ?। अपि तु न शक्नुयुः। अतः सप्तमभूमिगतः पुरुषो न स्वयं न परप्रेरितो वा किमपि कुरुते यथर्षभदेवः। तत्र श्रुतयः—

" यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्तत्केन कं जिघ्रेत्तत्केन कꣳ रसयेत्तत्केन कमभिवदेत्तत्केन कꣳ शृणुयात्तत्केन कं मन्वीत तत्केन कꣳ स्पृशेत्तत्केन कं विजानीयाद्येनेदꣳसर्वं विजानाति तं केन विजानीयात्" (बृ. ४।५।१५)

" त्वत्ताऽहंताऽऽत्मता यत्र परता नास्ति काचन।
न क्वचिद्भावकलना न भावाभावगोचरा॥
सर्वं शान्तं निरालम्बं व्योमस्थं शाश्वतं शिवम्।
अनामयमनाभासमनामकमकारणम्॥

न सन्नासन्नमध्यान्तं न सर्वं सर्वमेव च ।
मनोवचोभिरग्राह्यं पूर्णात्पूर्णं सुखात्सुखम् ॥
असंवेदनमाशान्तमात्मवेदनमाततम् ।
सत्ता सर्वपदार्थानां नान्या संवेदनादृते ॥ ''

( महोपनिष. ५ । ४४–४७ )

" कुर्वन्नभ्यासमेतस्यां भूम्यां सम्यग्विवासनः ।
सप्तमी गाढसुप्त्याख्या क्रमप्राप्ता पुरातनी ॥
यत्र नासन्न सद्रूपो नाहं नाप्यनहंकृतिः ।
केवलंक्षीणमनन आस्तेऽद्वैतेऽतिनिर्भयः ॥
अन्तःशून्यो बहिःशून्यः शून्यकुम्भ इवाम्बरे ।
अन्तः पूर्णो बहिः पूर्णः पूर्णकुम्भ इवार्णवे ॥ "

( वराहोपनिष. ४ । १६–१८ )

" एषा हि जीवन्मुक्तेषु तुर्यावस्थेति विद्यते ।
विदेहमुक्तिविषयं तुर्यातीतमतः परम् ॥
ये निदाघ ! महाभागाः सप्तमीं भूमिमाश्रिताः ।
आत्माऽऽरामा महात्मानस्ते महापदमागताः ॥
जीवन्मुक्ता न मज्जन्ति सुखदुःखरसस्थिते ।

प्रकृतेनाथ कार्येण किञ्चित्कुर्वन्ति वा न वा ॥
पार्श्वस्थबोधिताःसन्तः पूर्वाऽऽचारक्रमाऽऽगतम् ।
आचारमाचरन्त्येव सुप्तबुद्धवदुत्थिताः ॥
भूमिकासप्तकं चैतद्धीमतामेव गोचरम् ।
प्राप्य ज्ञानदशामेतां पशुम्लेच्छाऽऽदयोऽपि ये ॥
सदेहा वाऽप्यदेहा वा ते मुक्ता नात्र संशयः ।
ज्ञप्ति र्हि ग्रन्थिविच्छेदस्तस्मिन्सति विमुक्तता ॥ "

( महोपनिष. ५ । ३५–४० ) इत्याद्योऽनेकसहस्रशः श्रुतयो ज्ञानिनः कर्तव्यत्वाभावमाहुः ॥ ७ ॥

अनेन भूमिसप्तककथनेन शास्त्राऽऽचार्याऽऽदिमोक्षसाधनानामानर्थक्यशङ्का ज्ञानिनः कर्मकर्तव्यत्वशङ्का द्वैतप्रपञ्चस्य बन्धमोक्षाऽऽदिरूपस्य सत्यत्वशङ्का च निराकृता । तथा ' गुरुवेदान्तविचाराऽऽदि कुत्रोपयुज्यते ? ' इत्यस्य प्रतिवचनं चोक्तमिति द्रष्टव्यम् ।

" योगिनो भोगिनो वाऽपि त्यागिनो रागिणोऽपि च ।
ज्ञानान्मोक्षो न सन्देह इति वेदान्तडिंडिमः ॥ "

( इत्यष्टमश्लोकव्याख्या ) ॥ ८ ॥

गुर्वष्टकमद्वैतार्थप्रकाशिकया मणिदीपिकया व्याख्यया सहितम् ।

उ० अथेदानीमष्टकपठनतदर्थज्ञानयोः फलमुच्यते—

मू० एतच्छ्रीगुरुदेववन्दनपरं मोक्षप्रदं चाष्टकं
माङ्गल्यं यतिनाह वैविरचितं प्राज्ञोहराऽऽख्येन यः ॥
नित्यं भक्तियुतः पठेत्स परमां शान्तिं ध्रुवां प्राप्नुया-
च्छ्रीमत्सद्गुरुदेवपादकमले सक्तोऽत्र नो संशयः ॥९॥

इति श्रीमत्परमहंसपरिव्राजकाऽऽचार्य श्रीबालकभारती-
पूज्यपादशिष्यपरमहंसहरिहराऽऽनन्दभारतीविरचितं
श्रीगुर्वष्टकं संपूर्णम् ॥

ॐ तत्सत् ॥ १ ॥

टी० एतदिति । एतत् ‘ यस्मात् ’ इत्याऽऽरभ्य ‘ ॐ ’ इत्यन्तम् । हराऽऽख्येन हरदेवभारत्याख्येन ( हरिहराऽऽनन्दभारत्याख्येन ) यतिनां संन्यासिना विरचितं श्रीगुरुदेववन्दनपरं माङ्गल्यं श्रवणपठनमात्रत एव शुभकरं च पुनर्मोक्षप्रदं तदर्थसहितपठितं जीवब्रह्मैक्यज्ञानद्वारा स्वरूपसाक्षात्काररूपमोक्षप्रदमष्टकमष्टश्लोकाऽऽत्मकं ज्ञानगर्भं स्तोत्रम् । यः प्राज्ञो मुमुक्षु र्नित्यं भक्तियुतः सन्पठेत् । स श्रीमत्सद्गुरुदेव-

पादकमले श्रीमतः सद्गुरोर्देवस्य पादकमलयोः ( जातावेकवचनम् ) सक्तः श्रद्धवान् । परमां श्रेष्ठां मोक्षाऽऽख्यां ध्रुवामपुनरावृत्तिरूपां शान्तिं प्राप्नुयात्प्राप्स्यति । अत्रास्मिन्विषये संशयो नो नास्ति गुरुभक्तेः सर्वेषु मोक्षसाधनेषूत्तमत्वात् ।

एतदुक्तं भवति—ज्ञानं विना न मोक्षः किं तु ब्रह्मात्मैक्यज्ञानादेव साक्षात्कारपर्यन्तान्मोक्षो भवति । तच्च ज्ञानं न गुरूपदेशवेदान्तविचाराभ्यामन्तरेण भवति । गुरूपदेशवेदान्तविचारयोरपि वेदान्तविचारो गुरूपदेशद्वारैव भवति न स्वतः । स चोपदेशो न गुरुभक्तिं विना लभ्यः । अतो गुरुभक्तिरेव मोक्षसाधनेष्वेकान्तिकसाधनमिति स्थिते गुरुसेवया गुरुप्रसन्नता ततो गुरुमुखान्महावाक्यश्रवणं ततो ज्ञानं ततो मोक्षो भवति । इत्येवं गुरुभक्ते र्मोक्षसाधनेषु मुख्यत्वं ज्ञापयितुम् 'नो संशयः' इत्युक्तम् । तथा च श्रुतयः—

" तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ॥ " ( मुं० १ । २ । १२ ) " आचार्याध्द्येव विद्या विदिता साधिष्ठं प्रापयति ॥ " ( छा. ४ । ९ । ३ ) " आचार्यवान्पुरुषो वेद ॥ " ( छा. ६ । १४ । २ )

" यस्य देवे परा भक्ति र्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥ " ( श्वे. ६ । २३ ) " सर्वशरीरस्थचैतन्यब्रह्मप्रापको गुरुरुपास्यः ॥ " ( निरालम्बोपनिष. ) " हंसविद्यामृते लोके नास्ति नित्यत्वसाधनम् ।

यो ददाति महाविद्यां हंसाऽऽख्यां पारमेश्वरीम् ॥

तस्य दास्यं सदा कुर्यात्प्रज्ञया परया सह ।

शुभंवाऽशुभमन्यद्वा यदुक्तं गुरुणा भुवि ॥

तत्कुर्यादविचारेण शिष्यः संतोषसंयुतः ।

हंसविद्यामिमां लब्ध्वा गुरुशुश्रूषया नरः ॥

आत्मानमात्मना साक्षाद्ब्रह्म बुद्ध्वा सुनिश्चलम् ।

देहजात्यादिसम्बन्धान्वर्णाऽऽश्रमसमन्वितान् ॥

वेदशास्त्राणि चान्यानि पदपांसुमिव त्यजेत् ।

गुरुभक्तिं सदा कुर्याच्छ्रेयसे भूयसे नरः ॥

गुरुरेव हरिः साक्षान्नान्यः " ( ब्रह्मविद्योपनिष. २६–३१ ) " आप्तोपदेशगम्योऽसौ सर्वतः । " ( ब्रह्मविद्योपनिष. ३३ ) " गुरुवक्त्रात्तु लभ्येत प्रत्यक्षं सर्वतो मुखम् ॥ " ( ब्रह्मविद्योपनि. ३४ ) " चोदको बोधकश्चैव मोक्षदश्च परः स्मृतः ॥

इत्येषां त्रिविधो ज्ञेय आचार्यस्तु महीतले ॥
चोदको दर्शयेन्मार्गं बोधकः स्थानमाचरेत् ॥
मोक्षदस्तु परं तत्त्वं यज्ज्ञात्वा परमश्नुते ॥ ”

( ब्रह्मविद्योपनिष. ५१—५३ ) इत्याद्यः सहस्रशः ।

अथ किं बहुना कथनेन गुरुभक्तिः खल्वीश्वरभक्तेरत्यतिरिच्यते । कथम् ? । ईश्वरभक्तेः केवलान्तःकरणशुद्धिरेव भवति न बोधसिद्धिः । अथ गुरुभक्तेस्तु पूर्वं भक्तिप्रभावादन्तःकरणशुद्धिस्ततो बोधोपयोगिशमदमाऽऽदिशुभगुणनिष्पत्तिस्ततः सेवया प्रसन्नो गुरुः कृपया स्वयमेव श्रुतियुक्तिभ्यां ब्रह्मात्मैक्यज्ञानोपदेशं करोति । ज्ञानेन चाज्ञाननिवृत्तेस्तज्जन्यजन्माऽऽदिभ्रान्तिनाशपूर्वकस्वरूपावस्थानरूपो मोक्षो भवति ।

यस्तु कश्चिद्रामकृष्णाऽऽदिरूपेणेश्वरेणापि लक्ष्मणहनुमदर्जुनाऽऽदिभ्यो ज्ञानोपदेशः कृतः । तत्रापि गुरुत्वं प्राप्यैवेश्वरोऽपि तेभ्य उक्तवान् । तथा चोक्तमर्जुनेन—“ शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् । ” ( भ. गी. २ । ७ ) इति । अतः सिद्धं गुरुत्वस्येश्वरत्वाच्छ्रेष्ठत्वं गुरुभक्तेश्चेश्वरभक्तेः श्रेष्ठत्वम् ।

तथा च श्रुतयः—

" जीवेश्वराऽऽदिरूपेण चेतनाचेतनाऽऽत्मकम् ।
ईक्षणाऽऽदिप्रवेशान्ता सृष्टिरीशेन कल्पिता ।
जाग्रदादिविमोक्षान्तः संसारो जीवकल्पितः ॥
त्रिणाचिकाऽऽदियोगान्ता ईश्वरभ्रान्तिमाश्रिताः ।
लोकायताऽऽदिसांख्यान्ता जीवविभ्रान्तिमाश्रिताः ॥
तस्मान्मुमुक्षुभिर्नैव मतिर्जीवेशवादयोः ।
कार्या किं तु ब्रह्मतत्त्वं निश्चलेन विचार्यताम् ॥
अविशेषेण सर्वं तु यः पश्यति चिदन्वयात् ।
स एव साक्षाद्विज्ञानी स शिवः स हरिर्विधिः ॥
दुर्लभो विषयत्यागो दुर्लभं तत्त्वदर्शनम् ।
दुर्लभा सहजावस्था सद्गुरोः करुणां विना ॥ "

( महोपनिष. ४ । ७३–७७ ) इति ।

ईश्वरोऽस्तु, परन्तु मुमुक्षोस्तु न गुरुकरुणां विना मोक्षो भवतीति श्रुतितात्पर्यं न निरीश्वरत्वे नचेश्वरनिंदायामिति द्रष्टव्यम् ।

तथा हि——यद्यपि पर एवाऽऽत्मा स्वमाययेश्वराऽऽकारेण गुर्वाकारेण च विवर्त्तते स्वयम् ।

अतो न गुर्वीश्वरशब्दयो र्लक्ष्यार्थे भेदोऽस्ति तात्त्विकः

" गुरु र्ब्रह्मा गुरु र्विष्णु र्गुरु र्देवस्सदाऽच्युतः ।
न गुरोरधिकः कश्चित्त्रिषु लोकेषु विद्यते ॥

दिव्यज्ञानोपदेष्टारं देशिकं परमेश्वरम् ।
पूजयेत्परया भक्त्या तस्य ज्ञानफलं भवेत् ॥

यथा गुरुस्तथैवेशो यथैवेशस्तथा गुरुः ।
पूजनीयो महाभक्त्या न भेदो विद्यतेऽनयोः ॥ "

( योगशिखोपनिष. ५ । ५६–५८ ) इत्यादि श्रुतिभ्योऽभेदावगमात् । तथाऽपि तयो र्वाच्यभेदमाश्रित्य तु तयोर्भेद उच्यते । तथैव तयोः कृत्यभेदोऽपि दृश्यते लोके । कथम् ? । ईश्वरः खलु भ्रांतिवशं जीवं कर्मानुसारेण तत्र तत्र भ्रामयति पूर्वदेहं परित्याज्य देहान्तरं प्रापयति तथैव तत्रापि केवलं कर्मानुरोधेनैव सुखदुःखरूपं फलं भोजयति न तु स्वरूपबोधेनाविद्यानाशपूर्वकस्वरूपावस्थानरूपमोक्षदशां प्रापयति ।

गुर्वष्टकमद्वैतार्थप्रकाशिकया मणिदीपिकया व्याख्यया सहितम् ।

अथ श्रीगुरुस्तु प्रपन्नं शिष्यं श्रुतियुक्तिभ्यां ब्रह्मात्मैक्यज्ञानोपदेशेनाविद्याकृतजीवत्वबद्धत्वकर्तृत्वभोक्तृत्वब्रह्माभिन्नत्वोपासकत्वाऽऽदिभ्रान्तिनाशपुरःसरंप्रत्यगभिन्नब्रह्मात्मनाऽवस्थानरूपां निर्भयां मोक्षदशां प्रापयति । अतो गुरुरेव श्रेष्ठत्वादुपास्यो मुमुक्षुभिरितिसिद्धं मुमुक्षुदशायाम् ।

अथ वस्तुगत्या तु परमात्मैवेश्वरगुर्वाद्याकारेण विवर्त्ततेऽतो न कोऽपि भेद इति सिद्धान्तः ।

" ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः ।
जीवन्मुक्तस्तु तद्विद्वानिति वेदान्तडिंडिमः ॥ "

( इति नवमश्लोक व्याख्या ) ॥ ९ ॥

इति श्रीमत्परमहंसपरिव्राजकाऽऽचार्य श्रीबालकभारतीपूज्यपादशिष्यपरमहंसहरिहराऽऽनन्दभारतीविरचिता गुर्वष्टकद्वैतार्थप्रकाशिका मणिदीपिका व्याख्या समाप्तिं प्राप्ता ॥

॥ ॐ तत्सत् ॥ १ ॥

(सं. १९७६ आषाढमासशुक्लपक्षस्य पूर्णमास्यां भौमवासरे ॥)

( स. ता. २३ । ७ । १९१८ समाप्तिं प्राप्तोऽयं ग्रन्थः ॥ )